भा०तत्र पदवाक्यप्रमाणज्ञेनाचार्येण वेदान्तवाक्यानां ब्रह्मावगतिपरत्वप्रदर्शनाय वाक्याभासयुक्त्यभास-प्रतिपत्तयः पूर्वपक्षीकृत्य निराक्रियन्ते ॥ तत्र साङ्ख्याः प्रधानं त्रिगुणमचेतनं जगतः कारणमिति मन्यमानाश्चाहुः-"यानि वेदान्तवाक्यानि सर्वज्ञस्य सर्वशक्तेर्ब्रह्मणो जगत्कारणत्वं दर्शयन्तीत्यवोचस्तानि प्रधानकारणपक्षेऽपि योजयितुं शक्यन्ते। सर्वशक्तित्वं तावत्प्रधानस्यापि स्वविकारविषयमुपपद्यते ॥ एवं सर्वज्ञत्वमप्युपपद्यते ॥ कथम् ॥ यत्तु ज्ञानं मन्यसे, स सत्त्वधर्मः। "सत्त्वात्सञ्जायते ज्ञानम्" [भ० गी० १४। १७] इति स्मृतेः ॥ तेन च सत्त्वधर्मेण ज्ञानेन कार्यकारणवन्तः पुरुषास्सर्वज्ञा योगिनः प्रसिद्धाः ॥ सत्त्वस्य हि निरतिशयोत्कर्षे सर्वज्ञत्वं प्रसिद्धम् ॥

---

रत्नप्रभा।

त्वगौणत्वाभ्यां संशये पूर्वपक्षमाह–तत्रसांख्या इति ॥ अपिशब्दौ एवकारार्थौ। सदेवेत्यादिस्पष्टब्रह्मलिङ्गवाक्यानां प्रधानपरत्वनिरासेन ब्रह्मपरत्वोक्तेः श्रुत्यादिसंगतयः ॥ पूर्वपक्षे जीवस्य प्रधाने-

क्योपास्तिः सिद्धान्ते ब्रह्मैक्यज्ञानमिति विवेकः । अचेतनसत्त्वस्यैव सर्वज्ञत्वं, न चेतनस्येत्याह—तेन च सत्त्वधर्मेणेति ॥

भामती ।

सुषुप्तावस्थायां ब्रूते । प्रधानांशतमःसमुद्रेके हि जीवो निद्राणस्तमसीव मग्नो भवति । यथाहुः—'अभावप्रत्ययालम्बना वृत्तिर्निद्रा' इति । वृत्तीनामन्यासां प्रमाणादीनामभावस्तस्य प्रत्ययकारणं तमस्तदालम्बना निद्रा जीवस्य वृत्तिरित्यर्थः । तथा सर्वज्ञं प्रस्तुत्य श्वेताश्वतरमन्त्रोऽपि—'सकारणं करणाधिपाधिपः' इति प्रधानाभिप्रायः । प्रधानस्यैव सर्वज्ञत्वं प्रतिपादितमधस्तात् । तस्मादचेतनं प्रधानं जगदुपादानमनुवदन्ति श्रुतय इति पूर्वः पक्षः । एवं काणादादिमतेऽपि कथंचिद्योजनीयाः श्रुतयः । अक्षरार्थस्तु प्रधानकारणपक्षेऽपीति प्रधानस्यापीति । अपिकारावेवकारार्थौ । स्यादेतत् । सत्त्वसंपत्त्या चेदस्य सर्वज्ञताथ तमःसंपत्त्याऽसर्वज्ञतैवास्य कस्मान्न भवतीत्यत आह—तेन च सत्त्वधर्मेण ज्ञानेनेति । सत्त्वं हि प्रकाशशीलं निरतिशयोत्कर्षं सर्वज्ञताबीजम् । यथाहुः—'निरतिशयं सर्वज्ञताबीजम्' इति । यत्खलु सातिशयं तत्क्वचिन्निरतिशयं दृष्टं यथा कुवलामलकबिल्वेषु सातिशयं महत्त्वं व्योम्नि परममहति निरतिशयम् । एवं ज्ञानमप्येकद्विबहुविषयतया सातिशयमित्यनेनापि क्वचिन्निरतिशयेन भवितव्यम् । इदमेव चास्य निरतिशयत्वं

## आनन्दगिरीय—न्यायनिर्णयः ।

जगदुपादानं प्रधानं ब्रह्मैवेति वादिविवादाज्ज्ञातृत्वज्ञानाभ्यां संशय्यानन्तराधिकरणपूर्वपक्षमाह—तत्रेति । स्थितं समुदायतात्पर्यं सप्तम्यर्थः । सर्वज्ञे जगद्धेतौ समन्वयोक्त्या तच्चैतन्यमाक्षिप्य समर्थ्यत इत्यधिकरणसंगतिः । नानाशाखास्थस्फुटब्रह्मलिङ्गवाक्यानां ब्रह्मण्येव समन्वयोक्तेः श्रुत्यादिसंगतयः । तत्त्वमसीति तच्छब्दितप्रधानैक्यसंपत्तिः पूर्वपक्षे । सिद्धान्ते चिदात्मनो ब्रह्मैक्यं फलम् । प्रकर्षेण धीयते सर्वं जगदस्मिन्निति ब्रह्मापि प्रधानं ततो विशिनष्टि—त्रिगुणमिति । परिणामयोग्यत्वमाह—अचेतनमिति । सांख्यीयमतं श्रुतिविरोधात्त्याज्यमित्याशंक्याऽऽह—यानीति । जीवाख्यचित्प्रतिबिम्बानां स्वतो विभजननियमेनैकीकरणशक्तयो न प्रधानस्याचेतनस्येत्यन्यदेव सर्वशक्तिमदेष्टव्यमित्याशंक्य चित्प्रतिबिम्बानामनुत्पाद्यत्वादुत्पाद्यार्थशक्तिरस्यापि स्यादित्याह—सर्वेति । तथाऽपि कुतोऽस्याचेतनत्वे सर्वज्ञता तत्राऽऽह—एवमिति । यस्य न ज्ञत्वमेव तस्य कुतः सर्वज्ञतेत्याह—कथमिति । प्रधाने ज्ञानकर्तृत्वं संभावयितुं ज्ञानस्वरूपमाह—यदिति । ननूक्तज्ञानेन चेतनानामेव योगिनां सर्वज्ञत्वात्तदचेतनं प्रधानं कथं तेन सर्वज्ञमुच्यते तत्राऽऽह—तेनेति । कार्यकरणवन्त इत्यचैतन्यमुक्तम् । तत्रापि चेतनांशस्यैव सर्वज्ञत्वं सत्त्वस्य सहायतया तदुत्कर्षान्वय-

व्यतिरेकयोरन्यथासिद्धेरित्याशङ्क्याऽऽह—सत्त्वस्येति । केवल-
व्यतिरेकाभावान्न चेत

भा० न केवलस्याकार्यकरणस्य पुरुषस्योपलब्धिमात्रस्य सर्वज्ञत्वं किञ्चिज्ज्ञत्वं वा कल्पयितुं शक्यम् ॥ त्रिगुणत्वात्तु प्रधानस्य सर्वज्ञानकारणभूतं सत्त्वं प्रधानावस्थायामपि विद्यते इति, प्रधानस्याचेतनस्यैव सतस्सर्वज्ञत्वमुपचर्यते वेदान्तवाक्येषु ॥ अवश्यञ्च त्वयापि सर्वज्ञं ब्रह्माभ्युपगच्छता सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वमभ्युपगन्तव्यम् ॥ नहि सर्वदा सर्वविषयज्ञानं कुर्वदेव ब्रह्म वर्तते । तथा हि ज्ञानस्य नित्यत्वे, ज्ञानक्रियां प्रति स्वातन्त्र्यं ब्रह्मणो हीयेत ॥ अथाऽनित्यं तदिति, ज्ञानक्रियाया उपरमेतापि ब्रह्म ॥ तदा सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वमापतति ॥ अपि च प्रागुत्पत्तेस्सर्वकारकशून्यं ब्रह्मेष्यते त्वया न च ज्ञानसाधनानां शरीरेन्द्रियादीनामभावे ज्ञानोत्पत्तिः कस्यचिदुपपन्ना ॥ अपि च प्रधानस्यानेकात्म-

१ उपरमे उपरमेतापि पा० ।

## रत्नप्रभा ।

न केवलस्येति ॥ जन्यज्ञानस्य सत्त्वधर्मत्वात् नित्योपलब्धेरकार्यत्वाच्चिन्मात्रस्य न सर्वज्ञानकर्त्तृत्वमित्यर्थः । ननु गुणानां साम्यावस्था प्रधानम् इति सांख्या वदन्ति । तदेवावस्थायां सत्त्वस्योत्कर्षाभावात् कथं सर्वज्ञतेत्याह—त्रिगुणत्वादिति ॥ त्रयो गुणा एव प्रधानं, तस्य साम्यावस्था तदभेदात् प्रधानम् इत्युच्यते । तदवस्थायामपि प्रलये सर्वज्ञानशक्तिमत्त्वरूपं ससर्वज्ञत्वमक्षतमित्यर्थः । ननु मया किमिति शक्तिमत्त्वरूपं गौणं सर्वज्ञत्वमङ्गीकार्यमिति तत्राह—न हीति ॥ अनित्यज्ञानस्य प्रलये नाशात् शक्तिमत्त्वं वाच्यं कारकाभावाच्चेत्याह—अपि चेति ॥ मतद्वयसाम्यमुक्त्वा स्वमते विशेषमाह—अपि चेति ॥ ब्रह्मणः कारणत्वं स्मृतिपादे समर्थ्यते । प्रधानादेः कारणत्वं—

## भामती ।

यद्विदितसमस्तवेदितव्यत्वम् । तदिदं सर्वज्ञत्वं सत्त्वस्य निरतिशयोत्कर्षत्वे संभवति । एतदुक्तं भवति—यद्यपि रजस्तमसी[1] अपि स्तः, तथापि पुरुषार्थप्रयुक्तगुणवैषम्यातिशयात्सत्त्वस्य निरतिशयोत्कर्षे सार्वज्ञ्यंकार्यमुत्पद्यत इति

---

१ ब्रह्मवादिना ।

प्रधानावस्थायामपि तन्मात्रं विवक्षित्वाऽविवक्षित्वा च तमःकार्यं प्रधानं सर्वज्ञमुपचर्यंत इति । अपिभ्यामवधारणस्य व्यवच्छेद्य-माह-न केवलस्येति । न हि किंचिदेकं कार्यं जनयेदपि तु बहूनि । चिदात्मा चैकः, प्रधानं तु त्रिगुणमिति तत एव कार्यमुत्पत्तुमर्हति । न चिदात्मन इत्यर्थः । तत्रापि च योग्यतामात्रेणैव चिदात्मनः सर्वज्ञताभ्युपगमो न कार्ययोगादित्याह-त्वयापीति । न केवल-स्याकार्यकारणस्येत्येतत्सिंहावलोकितेन प्रपञ्चयति-प्रागुत्पत्तेरिति । अपि च प्रधानस्येति । चस्त्वर्थः ।

## आनन्दगिरीय-न्यायनिर्णयः ।

नांशस्यैव सर्वज्ञतेत्यर्थः । किंच, तस्य सर्वज्ञत्वं दुर्ज्ञानं चिन्मात्रस्य ज्ञानकर्तृत्वायोगादित्याह-नेति । कार्यकरणविरहितत्वाच्च नास्य ज्ञानकर्तृतेत्याह-अकार्येति । पूर्णत्वाच्च तथेत्याह-पुरुषस्येति । प्रधा-नावस्थाया गुणसाम्ये सत्त्वोत्कर्षायोगान्न तस्य तत्कृतं सार्वज्ञ्यमित्या-शंक्याऽऽह--त्रिगुणत्वादिति । न च ज्ञानप्रतिबन्धकरजस्तमसो-रपि तत्र भावान्न सार्वज्ञ्यम् । वस्तुतस्तद्भावेऽपि माणवकस्या-ग्नित्ववत्तदुपचारात्तदाह-उपचर्यंत इति । गौणमुख्ययोर्मुख्ये संप्रत्य-यान्मुख्यग्रहणमाशंक्याऽऽह-अवश्यमिति । तत्र हेतुमाह-न हीति । तथात्वे काऽनुपपत्तिरित्याशंक्य तज्ज्ञानं नित्यमनित्यं वेति विकल्पयति-तथा हीति । तत्राऽऽद्यं दूषयति-ज्ञानेति ।

द्वितीयमनूद्य स्वमतासिद्धान्तमाह–अथेत्यादिना । अनित्यज्ञान-पक्षे ब्रह्मणः सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञतेत्यत्र हेत्वन्तरमाह–अपि चेति । तथाऽपि तस्य सर्वविषयं ज्ञानं किमिति नोत्पद्यते तत्राऽऽह–न चेति । आदिपदेन ज्ञेयज्ञात्रादिसंग्रहः । उभयत्राप्य-नुपपत्तिसाम्ये कथं पक्षविशेषपक्षपात इत्याशंक्य प्रधानपक्षे विशे-षमाह–अपि चेति । एकस्यापि ब्रह्मणःसामग्रीसंनि–

---

भा० कस्य परिणामसम्भवात्कारणत्वोपपत्तिर्मृदादि-वन्नासंहतस्यैकात्मकस्य ब्रह्मण इत्येवं प्राप्ते इदं सूत्रमारभते ईक्षतेर्नाशब्दमिति

---

रत्नप्रभा ।

तर्कपादे युक्तिभिर्निरस्यते । अधुना तु श्रुतिभिर्निरस्यति–ईक्ष-तेर्नाशब्दमिति ।

भामती ।

एवं प्राप्त उच्यते–ईक्षतेर्नाशब्दमिति

## आनन्दगिरीय-न्यायनिर्णयः ।

धानात्कारणत्वमाशंक्य तस्यासङ्गत्वादद्वयत्वाच्च नैवमित्याह-नेति । जगदुपादानव ! श्वेदान्तानां प्रधानपरतेति पूर्वपक्षमनूद्य सूत्रेण सिद्धान्तयति-एवमिति । सूत्रस्थं नञ्पदं व्याचष्टे-नेति । तत्र सौत्रमेव हेतुमाह-अशब्दं हीति । सदेवेत्यत्र सच्छब्दस्य तच्छब्दत्वान्नाशब्दत्वमित्याह-कथमिति । सौत्रं पदमवतार्य व्याकरोति=ईक्षतेरिति ।

इति श्रीमत्सर्वतंत्रस्वतंत्रविद्या वाचस्पति देवराज पं० देवदत्तशर्म संगृहीते वेदान्त सिद्धान्तमत मार्तण्डे प्रथमपादे रत्नप्रभा भामत्यानन्दगिरीयादिटीकात्रयोपेता चतुःसूत्री समाप्ता ।

———

# अथ वेदान्त सिद्धान्त मत मार्तण्डे

## ब्रह्मसूत्रे विषयानुक्रमणिका

### प्रथमाध्याये प्रथमपादे ।



❀ इति प्रथमपादः ❀

### अथ द्वितीयपादे ।

❀ इति द्वितीयपादः ❀

## अथ तृतीयपादे।



❀ इति तृतीयपादः ❀

## अथ चतुर्थपादे ।



॥ इति चतुर्थपादः ॥

## अथ द्वितीयाध्याये प्रथमपादः ।



॥ इति प्रथम पादः ॥

## अथ द्वितीयपादः ।



॥ इति द्वितीयपादः ॥

## अथ तृतीयपादः ।

॥ इति तृतीयपादः ।

## अथ चतुर्थपादः ।



इति द्वितीयाध्याये चतुर्थपादः ।

## अथ तृतीयाध्याये प्रथमपादः ।

॥ इति प्रथमपादः ॥

## अथ द्वितीयपादः।



॥ इति द्वितीयपादः ॥

## अथ तृतीयपादः



॥ इति तृतीयाध्याये तृतीयपादः ॥

## अथ चतुर्थपादः

॥ इति द्वितीयपादः ॥

## अथ तृतीयपादः



॥ इति तृतीय पादः ॥

## अथ चतुर्थपादः



इति चतुर्थाध्याये चतुर्थपादविषयानुक्रमाणिका ।

अथ वेदान्त सिद्धान्त मतमार्तण्डे प्रथमपादे

# ब्रह्मसूत्रम्

महर्षिवेदव्यासप्रणीतम् सर्वतंत्रस्वतंत्रविद्यावाचस्पति

देवराजपंण्डेमदत्तशर्मकृतविवरणेनालंकृतंभाषयोपसंस्कृतञ्च ॥

अथ प्रथमाध्याये प्रथम पादः प्रारभ्यते ।

अथातो ब्रह्मजिज्ञासा ॥ १ ॥

आनन्तर्यार्थस्याथशब्दस्याश्रयणात् श्रुत्या मंगलवतां यमादिसम्पन्नानामतो हेतोर्नाम कर्मफलानित्यत्वात् ब्रह्मकर्मजिज्ञासा नाम वक्ष्यमाणलक्षणब्रह्मैव कर्म तद्विषयकज्ञानेच्छा कर्तव्येति यावत् ॥ १ ॥

यहां पर अन्तर वाचक अथ शब्द के ग्रहण से श्रवण करने वाले मांगलिकों को यमादिक षट् सम्पत्तिवालों को लौकिक वैदिक कर्मफलों के अनित्य होने से ब्रह्म कर्म विषयक ज्ञान की इच्छा करनी चाहिये । १ ।

जन्माद्यस्य यतः ॥ २ ॥

यतो ब्रह्मणोऽस्य जगतो जन्माद्युत्पत्तिस्थितिभङ्गा भवन्ति ॥ २ ॥

जिस ब्रह्म से इस संसार की उत्पत्ति पालन नाश होता है । २ ।

शास्त्रयोनित्वात ॥ ३ ॥

शास्त्रस्य ऋग्वेदादेस्सर्वज्ञकल्पस्य योनित्वात् कारणत्वात पूर्वोक्तलक्षणं ब्रह्मसम्भवति

वेदों के योनि नाम कारण होने से पूर्व लक्षण याने संसार के जन्मादि जिससे हैं वही है जिसके शास्त्र से सब पदार्थ जाना जाता है वो ऋग्वेदादि कर्ता ब्रह्म ही बहुत ज्ञान से सर्वज्ञ कल्प ईश्वर हो सकते हैं उन से भिन्न कोई नहीं हो सकता है ॥३॥

तत्तु समन्वयात ॥ ४ ॥

तु शब्देन पूर्वोक्तब्रह्माक्षिप्यते तदेव शास्त्रादिकारणम् ब्रह्म जिज्ञास्यम् शास्त्रस्य नाम वेदस्य क्रमेणसा तस्मिन्नेव ब्रह्मणि समन्वयात् संलग्नात् ॥

वेदादिकों को कारण वही ब्रह्म है जिस ब्रह्म में क्रम से सर्व वेदों का तात्पर्य है ॥

ईक्षतेर्ना शब्दम् ॥ ५ ॥

ईक्षतेरिति धात्वर्थाश्रयणात ईक्षितृश्रयणात ब्रह्मण्येव प्रधानेश्रुति समन्वयात् प्रधानं न कारणं जगतः अशब्दत्वात शब्दो वेदः स तस्मिन्नास्तीति चाशब्दम् ॥

प्रधान अचेतन जगत का कारण नहीं हो सकता क्योंकि पेक्षत् देखता है हम बहुत हो जड़ नहीं देखता है ब्रह्म में तो सम्भव है इस लिये वेद जिसमें प्रमाण नहीं है अशब्द नाम प्रधान कारण नहीं है ॥

गौणश्चेन्नात्मशब्दात ॥ ६ ॥

गौणं प्रधानं गृह्यते चेन्न आत्मशब्दात आत्मश- प्रधानस्य विरोधीति आत्मशब्देन प्रधानं न गृह्यते ।

गौणतया भी जगत का प्रधान कारण है ऐसा कहा जाय तो नहीं होसका जहां पर ब्रह्म कारण कहा वहां पर आत्मा से कहा है ॥

तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

कैवल्यं तन्निष्ठस्य आत्मशब्दवाच्यस्य मोक्षोपदिश्यते प्रधानस्य जडत्वात् प्रधानस्य मोक्षोपदेशः संविरुध्यते।

आत्म शब्द भी गौणत्व से प्रधान को कहता है यदि ऐसा कहते हो तो भी संभव नहीं हो सकता कारण उसका यह है आत्मशब्द वाच्य जो चैतन्य उसको मोक्ष उपदेश कहते हैं प्रधान को जड होने से यह संघटन नहीं हो सक्ता है।

हेयत्वावचनाच्च ॥ ८ ॥

हेयत्वस्यानुक्तत्वात् प्रधानस्य ग्रहणं नभवति।

हेय के न कहने से प्रधान का ग्रहण नहीं हो सक्ता है क्यों कि प्रधान का त्याज्य है आत्मा त्याज्य नहीं है इस वास्ते ब्रह्म पर्याय जो आत्मा उससे ही जगत को कारणता संभव है।

स्वाप्ययात् ॥ ९ ॥

स्वस्मिन्नेवाप्ययात् जगतः अस्य स्वरूपमेवअपि इतो भवति इति स्वापीति प्रयोगपुरुषे एव लोके प्रभवाप्ययौ इति प्रसिद्धेरात्मैव सच्छब्दवाच्यो न प्रधानम्।

सुषुप्ति में आत्मा मात्र रहते हैं याने आत्मा ब्रह्माकार परिणत होता है उन्हीं में स्वपीति होके कर्ता सोना जागना पुरुष धर्म है प्रधान जड़ में असम्भव है।

गति सामान्यात् ॥ १० ॥

सर्वेषु वेदान्तेषु एकरूपेण ब्रह्मणः एव कारणाश्रवणात न प्रधानकारणम् रूपादिग्राहकत्वं चक्षुरादिषु यथा सर्वशास्त्रे एकरूपमेव

वेदों में एक ही तरह से सर्वत्र चेतन कारण वाद है जैसे सब शास्त्रों में रूपादि ग्राहक चक्षुरादि इन्द्रियों को एक ही तरह से सब शास्त्रों में कहा है इससे चेतन वाला सिद्ध होता है प्रधान वाद में शास्त्रों का परस्पर विरोध है इससे शुन्धोपशुन्याय से प्रधान कारण वाद स्वयं नष्ट है ॥

श्रुतत्वाच्च ॥ ११ ॥

सर्वज्ञमीश्वरं प्रकृत्यचेतन एव जगतः कर्तेति बोधितः ।

वेद में सर्वज्ञ ईश्वर को कहते हुये कहा है कि चेतन ही कर्ता वेद से सिद्ध होता है ।

आनन्दमयोऽभ्यासात ॥ १२ ॥

आनन्दमय आत्मा उपनिषदि पुनः पुनः श्रूयते न प्रधानमानन्दमयं सम्भवति ।

जड़ में आनन्द का प्रयोग नहीं सम्भव है इस कारण प्रधान कारण नहीं है उपनिषदों में तो आनन्दमय से जगत की उत्पत्ति कही है अतः आनन्दमय आत्मा वेदान्त में कहा है ।

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

बिकारे मयटि प्रधानस्य बिकृतत्वात्तस्यैव ग्रहणमिति चेन्नात्मनः ग्रहणमिति न आनन्दप्रचुरे मयटः श्रवणात् आनन्दमय आत्मैव गृह्यते ।

विकार वाचक मयट् होने से प्रधान ही का ग्रहण होगा प्रधान विकारवाला है आत्मा विकार वाला नहीं है इस कारण से प्रधान को ही ग्रहण होने से आत्मा को ग्रहण नहीं होगा एसा नहीं कह सक्ते हो प्रचुर बाचक मयट् यहां पर है सर्व सम्मत ब्रह्म ही आनन्दमय है ।

तद्धेतुव्यपदेशाच्च ॥ १४ ॥

आनन्दस्य कारणत्वं श्रूयते च ब्रह्मण इत्यानन्दप्राचुर्यं ब्रह्मण एव यस्यानन्देन सर्वमानन्दी भवतीतिश्रुतेः ।

ब्रह्मानन्द से सर्वानन्द होता है इससे आनन्दसागर ब्रह्म है इसलिये प्राचुर्यार्थक मयट् ब्रह्म में सम्भव है ।

मान्त्रवर्णिकमेवचगीयते ॥ १५ ॥

सत्यं ज्ञानमनन्तं ब्रह्मेत्युपक्रम्य अन्योन्तर आनन्दमय आत्मा इति मन्त्रे वर्णनात् आत्मैवानन्दमयः ॥

ब्रह्म का लक्षण सत्यंज्ञानमनन्तं ब्रह्म एसा कह कर आनन्दमय आत्मा है एसा कहा है इससे वेदोक्त लक्षण आनन्दमय आत्मा है ॥

नेतरोनुपपत्तेः ॥ १६ ॥

इतरो जीवः आनन्दमयो न अनुपपत्तेः नाम युक्तेरभावात् ईश्वर एव आनन्दमय इति सोऽकामयत इत्यादौ परस्मादात्मनो अन्यो जीवः न सम्भवति ।

ईश्वर से भिन्न आनन्दमय शब्द करके नहीं ग्रहण होता है ईश्वर के आनन्द से जीव आनन्दी होता है इस वास्ते सो कामयत इन सब श्रुतियों से परमात्मा से भिन्न जीव को आनन्द शब्द से नहीं ग्रहण होता है ।

भेदव्यपदेशाच्च ॥ १७ ॥

जीवात्मपरमात्मनो र्हि भेदो व्यपदिश्यते रसो वैसः इति श्रुतेः रसं ब्रह्म रसं लब्ध्वा आनन्दी भवति ब्रह्मावगतावानन्दी भवतीति भेदः ।

जीवात्मा और परमात्मा से भेद लिखा है इसका कारण परमात्मा आनन्दी है रस रूप है परमात्मा के जानने से जीव आनन्दी होता है ।

कामाच्च नानुमानापेक्षा ।। १८ ।।

कामयितृश्रवणात् आनन्दमयाधिकारे सोऽकामयतीति श्रुतेः सांख्यपरिकल्पितमचेतनं प्रधानमानुमानिकमपि आनन्दमयत्वेननापेक्षणीयम् दुष्टंसांख्यमतमत्र ।

आनन्दमयाधिकार में परमेश्वर इच्छा करते हैं हम बहुत हों इस श्रुति के बल से सांख्य के अनुमान से अचेतन प्रधान आनन्दमय शब्द करके नहीं लिया जाता है ।

अस्मिन्नस्य च तद्योगं शास्ति ।। १९ ।।

अस्मिन्नाम आनन्दमये प्रकृते आत्मनि प्रतिबुद्धस्य जीवस्य तदात्मना योगमेव मोक्षं शास्ति भेदादेव ।

इस आनन्द मयाधिकार में प्रस्तुत जो आत्मा ब्रह्म तदाकार जीव को होने को मोक्ष कहते हैं इससे भेद होता है ॥

अन्तस्तद्धर्मोपदेशात ।। २० ।।

अन्तरात्मा पुरुषप्रतीकादौऽध्यात्मत्वेन परमात्मैव तस्य परमात्मनोरेव धर्मोपदेशात ।

सूर्यादि में जो अन्तरात्मा है वही परमात्मा है परमात्मा का ही धर्म श्रुति में प्रतीकोपास्यसूर्यादि में कहा गया है ।

भेदव्यपदेशाच्चान्यः ।। २१ ।।

प्रतीकोपास्येभ्यः सूर्यादिभ्यः भिन्नएव परमात्मा श्रूयते "य आदित्ये तिष्ठन् इत्यादि ।

प्रतीक उपास्य जो सूर्यादि इनसे परमात्मा भिन्न है यह बात श्रुति सिद्ध है जैसा कि सूर्य के भीतर रहने वाला जिसको सूर्य नहीं जानते है।

आकाशस्तल्लिङ्गात ॥ २२ ॥

आकाशशब्देनापि ब्रह्मैवाभिधीयते तल्लिङ्गात "सर्वाणि हवा भूतानि आकाशादेव समुत्पद्यन्ते इति सर्वोत्पत्ति श्रुतेः" प्रकरणसम्भवाभ्याञ्च ।

आकाश से सब पदार्थ होते हैं इस श्रुति के बल से आकाश शब्द ब्रह्म लक्षण होने से ब्रह्म का ग्रहण होता है।

अत एव प्राणः ॥ २३ ॥

अत एव हेतोः प्राणशब्दोऽपि ब्रह्मण्येव ।

इसी प्रकार से प्राण शब्द भी श्रुति में प्रकरण से ब्रह्मवाचक ही लिया जाता है।

ज्योतिश्चरणाभिधानात ॥ २४ ॥

ज्योतिश्शब्देन ब्रह्मैव गृह्यते "त्रिपादस्यामृतन्दिवीति" श्रुतौ चरणाभिधानात् ।

प्रकरण से ज्योति शब्द से भी ब्रह्म ही कहा जाता है।

छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथाहि दर्शनम् ॥ २५ ॥

गायत्री छन्दो ब्रह्मेति कथनान्नान्यद्ब्रह्मेति चेन्न गायत्र्या चेतोर्पणाय तथा दर्शितं हि यतः ।

गायत्री में ब्रह्म बुद्धि करने से ब्रह्म है ऐसा कहा गया है समाधि स्थिर होने के कारण वर्णन किया है।

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

पादोऽस्य भूतानीति भूतानाम्पादः व्यपदेशोपपत्तेः ब्रह्मैव गायत्र्योपदिश्यते।

भूत पृथिव्यादि ब्रह्म का पाद सम्भव है इस से ब्रह्म ही गायत्री लिया जाता है।

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

दिवि दिवि इति चोभयत्रापि विरोधाभावात् ब्रह्मैव गृह्यते वृक्षाग्रे श्येनः वृक्षाग्रात् परश्चेतिवत्।

अधिकरण और अपादान शब्द के प्रयोग से विरोध नहीं होता है वृक्ष के आगे श्येन अथवा वृक्ष के आगे व पीछे होना सम्भव है।

प्राणस्तथानुगमात् ॥ २८ ॥

कौषीतकीविद्यायामपि ब्रह्मलिङ्गात् प्राणशब्देन ब्रह्मैव व्यपदिश्यते।

प्राण शब्द से ब्रह्म ही कहा जाता है ब्रह्म का लक्षण होने से।

नवक्तुरात्मोपदेशादितिचेदध्यात्मसम्बन्धभूमाह्यस्मिन् ॥ २९ ॥

वक्तुरिन्द्रस्यात्मात्र न गृह्यते किन्त्वध्यात्मसम्बधी भूमा ब्रह्मैव अध्यात्मसम्बन्धवाहुल्यात्।

प्रतर्दन को इन्द्र कहते है कि मैं तुम्हारा आत्मा हूं वहां पर भी ब्रह्मग्रहण है अध्यात्मज्ञान का वाहुल्य होने से।

शास्त्रदृष्ट्या तूपदेशो वामदेववत ॥ ३० ॥

यथा वामदेवो ब्रह्म भूत्वात्मानम्ब्रह्मत्वेन वर्णितवान् एवमेवेन्द्रोपि त्वाष्ट्रवधादात्मानम्ब्रह्म प्रतिजानीते शास्त्रेण तु ब्रह्मैवोपदिश्यते ।

शास्त्र से ब्रह्म ज्ञानी होकर वामदेव ने अपने को ब्रह्म कहा और इन्द्र ने भी प्रतर्दन अधिकार में वैसे ही अपने को ब्रह्म कहा है ।

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

जीवस्य मुख्यप्राणस्य च लिङ्गात न ब्रह्मेति न उपासनायाः त्रैविध्यात् सर्वत्रैव ब्रह्मणो योगाच्च ब्रह्मैव गृह्यते उपक्रमोपसंहाराभ्यामपि न अन्यत्रापि जीवप्राणलिङ्गेन ब्रह्मण उपासनाश्रयणम् एकोपासनायुक्ता नात्राविविधेति यावत् ।

जीव और मुख्य प्राण के लक्षण होने से ब्रह्म का ही ग्रहण है उपक्रम और उपसंहार में ब्रह्म कहा है जीवोपासना प्राणोपासना में भी ब्रह्मोपासना कहा है सो गौण है ।

इति ब्रह्मसूत्रे प्रथमाध्याये प्रथमपादः समाप्तः ।

---

## अथ प्रथमाध्याये द्वितीयः पादः प्रारभ्यते ।

सर्वत्र प्रसिद्धोपदेशात् ॥१॥

सर्वासूपासनसु ब्रह्मैवोपास्यमुपादिश्यते प्रसिद्धे हेतोः एतेन प्राप्तबाधाप्राप्तकल्पना न स्यादन्यथा तत्प्रसज्येत ।

सर्वत्र प्रसिद्ध ब्रह्म का उपासना में ग्रहण है जीव प्राणादिकों का ग्रहण नहीं है इस सूत्र से पूर्वपाद की संगति दिखलाई है ।

विवक्षितगुणोपपत्तेश्च ॥ २ ॥

तास्मिन् ब्रह्मणि विवाक्षितगुणानां सिद्धिः पुनः श्रूयते अतोपि न जीवादिगृह्यते मुख्योपासनायाम् ।

ब्रह्म का गुण ब्रह्म ही में युक्त है इससे भी उपासना में जीवादि का ग्रहण नहीं समझना चाहिये ।

अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

शारीरे जीवे ब्रह्मगुणानुपपत्तेः न शारीरो गृह्यते अपाणिपादादिगुणविशेषाणामभाववत्वम्ब्रह्मण्येव युज्यत इति ।

ब्रह्म का गुण जीव में सम्भव न होने से उपासना में जीव का ग्रहण नहीं है ।

कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

एकस्मिन्नेव जीवे कर्मकर्तृव्यपदेशो न युज्येते अतो ऽन्तरात्मशब्देन ब्रह्मैव ।

शारीरिक जीव में कर्मकर्तृव्यवस्था अनुपपन्न है इससे उपासना में ब्रह्म ही का ग्रहण है।

शब्दविशेषात् ॥ ५ ॥

शब्दप्रमाणेनापि अन्तरात्मा भिन्नः यथा "श्यामाको श्यामाकतण्डुलोवा" इति श्रुतेः तुषस्थानीयो जीवः तण्डुल स्थानीयो परमात्मा।

श्रुति प्रमाण भी होने से उपासना में जीव का ग्रहण नहीं है।

स्मृतेश्च ॥ ६ ॥

शारीरान्तरात्मनोर्भेदे स्मृतिरपि "ईश्वरःसर्वभूतानां हृद्देशेऽर्जुनतिष्ठति इति" एतेनापि जीवो नोपासनासु ग्राह्यः इति एतेन वालैः शारीर इव प्रतीयते ननु "जीवो वास्तव" इति भाष्यम्।

जीवों के हृदय में रह कर हम कर्म कराते हैं जैसे कुलाल चक्र चलाता है वैसे इससे भी उपासना में जीव को ग्रहण नहीं है।

अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

यथाकाशः सूचीपाशादावनल्पोप्यणुरिव तथा परिछिन्नो पीशःपरिछिन्नइवार्भकौकसि हृत्पुण्डरीकेऽणुरिवोपास्यमानःफलति।

आकाश के तरह व्यापक होते भी ईश्वर सूक्ष्माकाश हृदय में उपास्य है जैसे सूची छिद्र और पाश में आकाश सूक्ष्म दिखाया है उपासना के लिये यह कथन है।

सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

ईश्वरस्य सम्भोगप्राप्ति र्नभवति अज्ञानकल्पितत्वात् भोगस्य ईश्वरेऽज्ञानासम्भवादिति वैशेष्यात् ।

अज्ञान जन्य भोग जीव को होता है ईश्वर को अज्ञान नहीं इसलिये भोग भी ईश्वर को नहीं यही बात ईश्वर में जीव से विशेष है ।

अत्ता चराचरग्रहणात् ॥ ९ ॥

जीवे अग्नौ ब्रह्मणि चात्रत्वे प्राप्ते ब्रह्मण्येव युज्यते नान्ययोः सर्वग्रहणश्रुतेः अवेध्यत्वात् प्रकरणादपि ब्रह्मैवात्र ब्रह्मक्षत्रमृत्यूनामुपभोक्तृ काठके श्रूयते ।

सर्व वस्तु के उपसंहार करने वाले ब्रह्म का ग्रहण है अग्नि और जीव का ग्रहण नहीं है इस सूत्र में ।

प्रकरणाच्च ॥ १० ॥

प्रकरणेनापि ब्रह्मैवात्र सिद्धम् दुर्विज्ञेयत्वश्रुतेः 'नजायते म्रियते" "क इत्था वेद यत्र स इति" कठोपानिषत्के ।

कठोपनिषद्के प्रकरण से भी सर्वोपसंहारक ब्रह्म ही सिद्ध होता है ।

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

गुहां बुद्धिं हृत्पुण्डरीकम्वा प्रविष्टौ जीवात्मपरमात्मानौ चेति प्रकरणात् परमात्मप्रकरणात् परमात्मैवगृह्यते फलन्तु जीवस्यैव परमात्मन्यारोप्यते तर्प्ययितरिपानोपचारवत् काठकश्रुतिः

"ऋतम्पिवन्तौ सुकृतस्य लोके गुहाम्प्रविष्टौ परमे परार्धे छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः" इति धर्मोक्तेः।

जीवात्मा और परमात्मा हृदय रूप गुहा में रहते हैं जीव अपना कर्म भोगता है ईश्वर भुगवाता है यह वेदान्ती कहते हैं पञ्चाग्नि लेने वाले यह। ( धर्मराज के कथन से प्रकरण ब्रह्म का है इससे भी ब्रह्म ग्रहण सिद्ध होता है )।

विशेषणाच्च ॥ १२ ॥

विशेषणं गन्तृगन्तव्यादिलिङ्गम् गन्ता जीवः गन्तव्य म्ब्रह्म इति ब्रह्मप्रकरणम्।

ब्रह्म पद के पाने वाला जीव है इससे भी ब्रह्म प्रकरण सिद्ध होता है इसलिये ब्रह्म का ही ग्रहण समझना चाहिये।

अन्तर उपपत्तेः ॥ १३ ॥

सर्वान्तरः ईश्वरः कुतः उपपत्तेः "य एषोक्षिणि पुरुष इति श्रुतेः"।

सर्वान्तरात्मा ईश्वर है यह श्रुति सिद्ध है।

स्थानादिव्यपदेशाच्च ॥ १४ ॥

अनेकस्थाननिर्देशादक्षिण्यपि व्यपदेशो व्यापकत्वा दतोनैकदेशित्वम्।

व्यापक परमेश्वर को एक ही स्थान नहीं है इस वास्ते नेत्र में भी होने से व्यापकत्व नष्ट नहीं होता है जैसे सम्राट् को काशीश्वर कहने से साम्राज्य में हानि नहीं होती है।

सुखविशिष्टाभिधानादेव च १५

ध्यानार्थं भेदकल्पनया सुखविशिष्टस्य ब्रह्मणः प्रकृतस्य य एष इति सर्वनाम्नाभिधानादन्तरः परमात्मा स्यादिति।

सुख विशिष्ट से ब्रह्म का ग्रहण है ध्यान के लिये पृथक् कल्पना है।

श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

श्रुतोपनिषत्कस्य गत्यभिधानात् अक्षिस्थानः पुरुषो गृह्यते इतश्च।

सगुणोपासक को जो गति है दक्षिण मार्ग से गमन वही अक्षिस्थान पुरुष ईश्वर के जानने से भजन से होता है इससे भी अक्षिस्थान पुरुष ईश्वर है।

अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥

न पुनः छायात्मा विज्ञानात्मा वा गृह्यते तयोरनवस्थितेः।

अक्षिपुरुष छायात्मादि नहीं हो सकता है यह अनवस्थित है इस कारण।

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

सर्वाणि भूतान्यन्तरोयमयतीति श्रुतेरपि अक्षिपुरुषः परमात्मैव।

सर्वान्तर्यामी होने से भी परमात्मा है।

न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

स्मार्तम्प्रधानमपि न गृह्यते द्रष्टृत्वादेःअतद्धर्माभिलापात्।

स्मार्त प्रधान का भी ग्रहण नहीं है अचेतन होने से देख नहीं सकता है।

शारीरश्चोभयेपिहि भेदेनैनमधीयते ॥ २० ॥

शारीरो जीवोपि न गृह्यते यत उभये काण्वमाध्यन्दिनाः भेदेनैवेश्वरतोऽधीयन्ते जीवमिति ।

जीव भी नहीं हो सकता है अन्तरात्मा इस कारण सब शाखाओं में जीव ईश्वर का भेद कहा है ।

अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

अदृश्यादिगुणको भूतयोनिः परमेश्वर एव ।

मुण्डकोपनिषद् में कहा है अदृश्यादि गुण वाला भूतयोनि इससे भी परमात्मा का ग्रहण है ।

विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ ॥ २२ ॥

विशेषणेन भेदव्यपदेशेन च नेतरौ स्तः शारीरो वा प्रधानम्वा ।

दिव्य अमूर्त पुरुष के कहने से प्रधान और जीव का ग्रहण नहीं है ।

रूपोपन्यासाच्च ॥ २३ ॥

अग्निर्मूर्धेति रूपोपन्यासात् भूतयोनेः ग्रहणम् ।

ईश्वर का विराट् रूप भी कहा है इससे भी जीव प्रकृति का ग्रहण नहीं है ।

वैश्वानरस्साधारणशब्दविशेषात ॥ २४ ॥

जठराग्न्यादिषु साधारणशब्दविशेषात् वैश्वानरशब्देनापि परमात्मैव गृह्यते ।

वैश्वानर शब्द से भी परमेश्वर का ग्रहण है आगे विराट का वर्णन किया है इस से जीव अग्नि तदभिमानी देवता जाठराग्नीका ग्रहण नहीं है ।

स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

सूर्यः चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः इति तत्स्मर्यमाणं रूपं मूलभुता श्रुति मनुमापयेदस्य वैश्वानरस्य परमेश्वरपरत्वेनानुमानं लिङ्गं गमकं स्यादित्यर्थः ।

लोकात्मा परमेश्वर को प्रणाम करते हैं इस प्रमाण से भी वैश्वानर शब्द ही को कहता है ।

शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशा दसम्भवात्पुरुषमपि चैनमधीयते ॥ २६ ॥

शब्दादिभ्यः प्रमाणेभ्यः तथान्तः प्रतिष्ठानाच्च गृह्यता मग्न्यादिरिति न दृष्ट्युपदेशासम्भवात् परमात्मानमपि वैश्वानर म्पठति श्रुतिः ।

श्रुति भी परमात्मा को वैश्वानर शब्द से कहती है वैश्वानर ईश्वर है ।

अत एव न देवता भूतञ्च ॥ २७ ॥

अतः कारणात देवताभूतञ्चापि न वैश्वानरः ।

प्रसिद्ध वैश्वानर जो पञ्चभूत में एक है अग्नि अथवा देवता का ग्रहण नहीं है विराट् वर्णन दोनों का सम्भव नहीं है ।

साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

साक्षादीश्वरग्रहणेपि विरोधाभावं जैमिनिर्ब्रूते ।

साक्षात ईश्वर के ग्रहण में भी विरोध नहीं है जैमिनि के मत में ।

अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

अभिव्यक्ते प्रकाशायेति आश्मरथ्यो ब्रूते ।

प्रकाश प्रादेश मात्र में है इस कारण ईश्वर का ग्रहण है यह आश्मरथ्य आचार्य कहते हैं ।

अनुस्मृतेर्वादरिः ॥ ३० ॥

स्मरणहेतोरिति वादरायणो ब्रूते ।

स्मरण के लिये परमात्मा प्रादेश मात्र हृदय में ध्यान किये जाते हैं यह वेद व्यास कहते हैं ।

सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

सम्पत्तिनिमित्ता वा प्रादेशश्रुतिः जैमिनि र्विनिर्दिशति ।

प्रादेश मात्र में भी ईश्वर है इस सम्पति को दिखलाने के लिये जैमिनिमत में श्रुति का तात्पर्य है यह जैमिनि कहते हैं ।

आमनन्ति चैनमस्मिन् ॥ ३२ ॥

मूर्धचुवुकान्तराले एनम्परमेश्वरमामनन्ति अभ्यस्यन्ति जावालाः ।

ब्रह्मरन्ध्र में ईश्वर की उपासना कहा है जावाल आदि महर्षियों ने ।

इति ब्रह्मसूत्रे प्रथमाध्याये द्वितीयपादः समाप्तः ।

---

## अथ प्रथमाध्याये तृतीयः पादः प्रारभ्यते ।

द्युभ्वाद्यायतनम् स्वशब्दात ॥ १ ॥

न प्रधानं न वायुर्गृह्यते द्युभ्वाद्यायतनत्वेन किन्तु ताभ्यामोतप्रोतम्ब्रह्मैव गृह्यते ।

स्वर्ग भूतल आदि का आयतन ब्रह्म ही का ग्रहण है न प्रकृति न वायु का ग्रहण है ।

मुक्तोपसृप्यव्यपदेशात ॥ २ ॥

मुक्तैरुपसृप्यम्ब्रह्मेति समुपदिश्यतेऽतो ब्रह्मैव ।

मुक्त प्राप्य ब्रह्म है एसा कहा है इस से पृथिवी स्वर्ग वायु प्रधान का उपासना युक्त नहीं है

नानुमानमतच्छब्दात ॥ ३ ॥

न प्रधानमनुमानगम्यमिति गृह्यते अतच्छब्दात् न तस्य चेतनत्वस्य प्रतिपादकः शब्दः श्रुतिर्यस्मिन्निति अशब्दम्प्रधानम् ।

तत् नाम चेतन का प्रतिपादक शब्द न है जिस में एसे प्रधान का ग्रहण नहीं है उपासना में केवल ब्रह्म ही का ग्रहण है जैसा वैशेषिक के अनुमान से ईश्वर सिद्ध किया है वैसा सांख्य के अनुमान से प्रधान का उपासना में ग्रहण नहीं है ।

प्राणभृच्च ॥ ४ ॥

प्राणभृज्जीवोपि न गृह्यते ।

जीव भी पृथिवी आकाशादि का आयतन नहीं है।

भेदव्यपदेशात् ॥ ५ ॥

भेदेनापि न जीवः।

भेद से भी ब्रह्म ही है जीव का ग्रहण नहीं है।

प्रकरणात् ॥ ६ ॥

प्रकरणादपि ब्रह्मैव गृह्यते।

प्रकरण से भी ब्रह्म का ही ग्रहण है इस से ब्रह्म ही सर्वाधार है।

स्थित्यदनाभ्याञ्च ॥ ७ ॥

द्वासुपर्णावत्र एकस्थितोऽपरोऽत्ति चेति स्थित्यदने ताभ्यामभिधेये ईश्वरः स उपास्यः इतर उपासको जीवसंज्ञः।

इस शरीर में एक कर्म फल खाता है वह जीव है जो नहीं खाता है उदासीन है वह ब्रह्म है इस से उपासक जीव है उपास्य ब्रह्म है।

भूमासम्प्रसादादध्युपदेशात् ॥ ८ ॥

सम्प्रसादः सुप्तिः ततोऽप्यधिकोपदेशात् न भूमा प्राणादिः किन्तु ब्रह्मैव न यतो हि प्रतिवादः उत्थापितः।

भूमा ब्रह्म का ग्रहण है वही प्रश्न परिसमाप्ति होने से प्राणादि कहा है भूमा अपने महिमा में रहता है यहां तक प्रश्न और उत्तर होता है।

धर्मोपपत्तेश्च ॥ ९ ॥

ईश्वर एव भूमधर्मोपपत्ते ईश्वरस्यैव ग्रहणम्।

भूमा का गुण ईश्वर में सम्भव है इस प्राणादि का गुण उपासना में नहीं है।

अक्षरमम्बरान्तधृतेः ॥ १० ॥

अक्षरम्ब्रह्मैवाम्बरान्तत्पाकाशस्य धारणात्।

आकाश को धारण करने से अक्षर ब्रह्म का ग्रहण है।

सा च प्रशासनात् ॥ ११ ॥

सा चाम्बरान्तधृतिः ब्रह्म व्यक्तिरेव प्रशास्तृत्वश्रुतेरतो न प्रकृत्यादयः।

आकाश धारण करने वाला ब्रह्म है प्रकृति नहीं क्योंकि आगे श्रुति में सूर्य चन्द्रमा जिसकी आज्ञा पालन करते हैं ऐसा कहा है सो यह गुण और में नहीं है।

अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अन्यभावोभेदस्तद्व्यावृत्तेः ब्रह्मैव।

सब किसी के कारण होते भी उनसे भिन्न कोई नहीं है इस श्रुति से भी ब्रह्म ग्रहण है।

ईक्षतिकर्मव्यपदेशात सः ॥ १३ ॥

ईक्षतिकर्म परमात्मैव सम्भवति।

देखने वाला ईश्वर है प्रधान जड़ नहीं देख सकता है इससे भी ईश्वर की ही उपासना है प्रधान का ग्रहण नहीं है यहां पर भी॥

दहर उत्तरेभ्यः ॥ १४ ॥

उत्तरेभ्य हेतुभ्य दहर आकाशो ब्रह्मैव।

आगे कहे कारणों से दहर नाम हृदयाकाश का है वह भी ब्रह्म है।

गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च ॥ १५ ॥

गत्या शब्देन च ब्रह्मणो लिंग व्यञ्जयति श्रुतिः सुषुप्तौ स्वमपीतो भवत्यहरहरिति च एतेनापि दहरो ब्रह्मैव गृह्यते।

नित्य ही प्रजा सुषुप्ति में प्राप्त होता है ब्रह्म को इस श्रुति से भी दहर ब्रह्म को कहते हैं।

धृतेश्च महिम्नोस्यास्मिन्नुपलब्धेः ॥ १६ ॥

अस्य धारणाख्यस्य स्वमहिम्नोस्मिन्दहरे परमात्मनि श्रुत्यन्तरे उपलब्धेः अतोपि ब्रह्मैव गृह्यते।

दहर ब्रह्म के महिमा से सब धारण किया गया है इस श्रुति से भी दहर नाम ब्रह्म का सिद्ध हुआ।

प्रसिद्धेश्च ॥ १७ ॥

आकाश शब्दस्य ईश्वरे प्रसिद्धेः दहराकाशो ब्रह्मैवेति विज्ञेयम्।

आकाशशब्द का ईश्वर प्रसिद्धि होने से दहराकाश को ब्रह्म ही जानना चाहिये।

इतरपरामर्शात्स इति चेन्नासम्भवात ॥ १८ ॥

अन्यपरामर्शात् विचारादपि जीवो न दहराकाशः तस्मिन् ब्रह्मगुणस्यासम्भवात।

विचार से भी जीव दहराकाश नहीं जीव में ब्रह्म गुण का असम्भव होने से।

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

उत्तरवाक्येपि जीवो ब्रह्ममिति न स जीव आविर्भूत-स्वरूपः परमात्मा ।

मुक्त जीव में दहराकाशादि यद्यपि सम्भव है ब्रह्म का उत्तर वाक्य छान्दोग्य से तथापि वह तो मुक्त ईश्वर है शंका का अवकाश नहीं है ।

अन्यार्थश्च परामर्शः ॥ २० ॥

नेत्यनुवर्तते अन्यार्थो जीवार्थो हि परामर्शो न पर्य्यव-सायी किन्त्वीश्वरार्थः ।

इस प्रकरण में परामर्श ईश्वर का सम्भव है जीव या प्रकृति के ग्रहण से अनर्थ होगा ।

अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

अल्पंदहराकाशमितिचेत अस्योत्तरं दत्तं अणोरणीया न्महतो महीयान् इत्यादौ ।

दहराकाश अल्प प्रदेश में बड़ा ब्रह्म केसे समा सकता है इसका उत्तर है ब्रह्म छोटे से छोटा है और बड़े से बड़ा है।

अनुकृतेस्तस्य च ॥ २२ ॥

सर्ववस्तुनो हि तस्यैवानुकरणात तथैव तमेवभान्तमनुभा न्तीत्याद्याः ।

ब्रह्म के प्रकाश से सूर्यादि प्रकाश करते हैं इससे भी ब्रह्म का ग्रहण है ।

अपि च स्मर्यते ॥ २३ ॥

स्मृतिरपि चात्र प्रमाणं भगवद्गीतासु न तद्भासयते सूर्यो" इत्यादिः ।

भगवद्गीता में भी कहा है सूर्य जिसको नहीं प्रकाश करता है वह धाम हमारा है ।

शब्दादेव प्रमितः ॥ २४ ॥

कठवाक्यादेव अंगुष्ठमात्रः प्रमितः पुरुषो ब्रह्मैवावगम्यते ।

कठोपनिषत् के वाक्य से ईश्वर अंगुष्ठमात्र है एसा कहा हृदय की अपेक्षा से।

हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

मनुष्याधिकारत्वात हृद्यपेक्षयाल्पत्वनिर्देशः परमात्मनः इति ।

मनुष्य के प्रस्तावना से अंगुष्ठमात्र कहा है ब्रह्म को हृदयाकाश को लेकर के ।

तदुपर्यपि वादरायणस्सम्भवात् ॥ २६ ॥

मनुष्यानुपर्यपि देवादेरपि सम्भवात अणुत्वमिष्टध्येय-मिति वादरायणो मनुते ।

देवताओं का भी ध्येय परमात्मा है इसलिये भी अणुत्वपरिचिन्तनार्थ, कहा है वेदव्यास के मत में ।

विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

देवानां स्वरूपसानिध्यश्चेत्कर्माणि युगपदनुपस्थितेर्विरोधइति चेन्न विरोधः देवादिकायव्यूहश्रुतेः विरोधाभावइति ।

देवता कौन स्वरूप से आता है एक देव अनेक यज्ञों में कैसे जांयगे एक समय में इससे कर्म में विरोध होगा सो यह नहीं देवता एक समय में अनेक देह धारण कर लेते हैं ऐसा श्रुति है ।

शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥

कर्मणि विरोधो माभूत् शब्देन विरोध इति चेन्न अतः वेदादेव प्रभवात् प्रत्यक्षानुमानाभ्यां शब्दाभ्यां न विरोध इति ।

कर्म से विरोध नहीं हो पर श्रुतियों से विरोध होता है ऐसा भी नहीं है वेदों ने देवतोत्पत्ति कहा है प्रत्यक्ष श्रुति और अनुमिता श्रुति भी मिलती है विरोध नहीं है।

अत एव च नित्यत्वम् २९

अत एव देवोत्पत्तेर्हेतोर्वेदस्य नित्यत्वम् ।

देवताओं के उत्पत्ति वर्णन करने से ही वेद नित्य है ।

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥

महाप्रलयेपि तुल्यश्रुतिदर्शनात् न विरोध श्रुते स्मृतेश्चोपलब्धेः ।

महाप्रलय में भी विरोध नहीं है वैसे नामरूप श्रुति स्मृति से।

मध्यादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥

मध्वादिविद्यासु देवानामसम्भवात् ब्रह्मविद्यायामनधिकाराज्जैमिनि ब्रूते ।

मधुविद्या सूर्यादि प्रतीकोपासना को कहते हैं सूर्य अपने को प्रतीक कैसे समझेंगे इस लिये देवता को ब्रह्म विद्या में अधिकार नहीं है यह जैमिनि कहते हैं।

ज्योतिषि भावाच्च ॥ ३२ ॥

ज्योतिर्मात्रश्रवणात्सूर्यादीनां हृदयाद्यभावात् ब्रह्मविद्यायां नाधिक्रियन्ते ते।

ज्योति मात्र में सूर्य शब्द का प्रयोग श्रवण से इन्द्रियाद्यभाव से ब्रह्म विद्या में अधिकार नहीं हो सकता है।

भावन्तु वादरायणोस्ति हि ॥ ३३ ॥

अधिकारस्य भावम्बादरायणो ब्रूते अस्तीति।

देवताओं का ब्रह्म विद्या में अधिकार है ऐसा वेद व्यास कहते हैं इसमें इन्द्र विरोचन का ब्रह्म विद्या पठन ब्रह्मा से छान्दोग्य में लिखा है सो सब श्रुति प्रमाण में कहीं हैं।

शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥

अस्य जानश्रुतेः तदनादरश्रवणात् तं रैक्वं शुक् शोकः आदुद्राव आत्मानं शूद्रमिव श्रुत्वेति तेन सूच्यते शूद्रो नाधिक्रियते वेदादिषु।

शूद्र को ब्रह्म विद्या में अधिकार नहीं है यह वाद रैक्व के सम्वाद श्रुति से सिद्ध है जानश्रुति नामांतर चैत्ररथ राजा है इनको ब्रह्म विद्या न जानने से शूद्र कहा है।

क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात ॥ ३५ ॥

राज्ञो जानश्रुतेः चैत्ररथाभिधेयस्य क्षत्रियत्वमुत्तरत्रश्रुतेः शूद्रो नाधिक्रियते।

जान श्रुति राजा क्षत्रिय थे चैत्ररथ भी उनका नाम था उनको सोते हुए को

हंसने कहा कि शूद्र है क्योंकि ब्रह्म विद्या नहीं जानता है वह राजा रैक से ब्रह्म विद्या जानली इसी से शूद्र नहीं जान सकता है।

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

शूद्रे संस्काराभावात् शूद्रो नाधिकारी ।

शूद्रों को संस्कार नहीं होता है इससे शूद्र को अधिकार नहीं।

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

शूद्राणामनधिकारत्वे एवं शास्त्रप्रवृत्तेः ।

शूद्र को अधिकार नहीं है यह जाबालमहर्षि ने कहा तुमने सत्य कहा इससे ब्राह्मण हो।

श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥

श्रुतिपठनेप्यनधिकारिणः कथं ब्रह्मविद्याधिगमः स्यात शूद्रस्य ।

वेद पढ़ने का शूद्र को अधिकार नहीं ब्रह्मविद्या में फिर अधिकारी कैसे हो सकता है शूद्र।

कम्पनात ॥ ३९ ॥

चलनात् चालनाद्वा ब्रह्मैवात्रगृह्यते ।

प्राणादि वायु के चालन करने वाले ब्रह्म हैं इस प्रकरण में।

ज्योतिर्दर्शनात ॥ ४० ॥

ज्योतिः प्रकरणेपि ब्रह्म गृह्यते ।

ज्योति शब्द भी यहां पर ब्रह्म ही को कहा है।

आकाशोऽर्थान्तरत्वादिव्यपदेशात ॥ ४१ ॥

अत्राकाशो ब्रह्मैव ।

आकाश को भी यहां ब्रह्म कहा है ।

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

सुषुप्तावुत्क्रान्तौ च भेदेन प्रतिपादनात् जीवात्मपर-मात्मनो रैक्यमेवोपक्रमोपसंहाराभ्याम् ।

सुषुप्ति और जागृत में जीव और ईश्वर का भेद होते भी प्रकरण से अभेद है ।

पत्यादिशब्देभ्यः ॥ ४३ ॥

सर्वस्याधिपतिरिति श्रुतेश्च ।

सब किसी का पति ईश्वर है इससे भी प्रकरण से ब्रह्म ही सिद्ध हुआ ।

इति ब्रह्मसूत्रे प्रथमाध्याये तृतीयपादः समाप्तः ।

## अथ प्रथमाध्याये चतुर्थः पादः प्रारभ्यते ।

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीते-
र्दर्शयति च ॥ १ ॥

कपिलादीनामानुमानिकश्रुत्या प्रधानम् कारणमिति चेन्न शरीर रूपक विन्यस्तगृहीतेः कठादावात्मानं रथिनं विद्धीति अन्यापि श्रुतिर्दर्शयति च इति ।

कपिल के मत में अजामेकां इत्यादि श्रुति प्रमाण से प्रधान कारण माना है सो नहीं कहना चाहिये सूक्ष्म को प्रधान कहते हैं और शरीर रूपक रथ रथि वर्णन है श्रुति में ब्रह्म प्राप्ति का उपाय भी बतलाया है इस वास्ते चेतन ब्रह्म कारण है दूसरे श्रुति में एस दिखलाया है ।

सूक्ष्मं तु तदर्हत्वात ॥ २ ॥

शरीरमपि सूक्ष्मं तद्योग्यत्वात लिङ्गशरीरे परमाणुरूपे ।

शरीर भी सूक्ष्म है लिङ्ग शरीर में सम्भव है ।

तदधीनत्वादर्थवत् ॥ ३ ॥

तत् प्रधानं ईश्वराधीनत्वादर्थवत्

प्रधान ईश्वराधीन होने से सफल होता है ।

ज्ञेयत्वावचनाच्च ॥ ४ ॥

ज्ञेयत्वं प्रधानं गृह्यते कापिलैस्तन्न श्रुतौ तदवचनात्

श्रुति में ज्ञेयत्व प्रधान को नहीं कहा है।

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

ज्ञेयत्वं कथयति चेन्न स प्राज्ञो हि यतः प्रकरणात

वेद कहता भी है प्रधान को तो वह प्रकरण से प्राज्ञ को कहता है।

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

अग्नेरात्मपरमात्मनस्त्रयाणामेवोपन्यासःकथनम् प्रश्नश्चकठे।

अग्नि जीव और परमात्मा का ग्रहण है कठवल्ली में प्रश्नोत्तर में।

महद्वच्च ॥ ७ ॥

महच्छब्दवदव्यक्तमपि वेदे ब्रह्मपरमेव।

महतशब्द वेद में जैसे ब्रह्म ही को कहता है वैसे अव्यक्त शब्द भी ब्रह्म ही को कहता है इस से प्रधान वेद मे अव्यक्त शब्द से ग्रहण नहीं होता है।

चमसवदविशेषात् ॥ ८ ॥

चमसशब्दो यथा न कश्चिद्विशेषार्थन्निरूपयति तथैवाजापि माया पर्य्यायैव नार्थान्तरा इति।

चमस यज्ञपात्र विशेष है और वही छिद्र वाचक भी है यज्ञ मे अधोमुख व ऊर्ध्वमुख चमस पात्र विशेष है पर्वत के कन्दरा में भी प्रसिद्ध है वैसे अजा शब्द भी माया वाचक श्रुति में प्रसिद्ध है।

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥

एके शाखिनः ज्योतिरुपक्रमा अजा हि यतोधीयते सा माया यथा तथा आमनान्ति रक्तादिवर्णविष्टं तेजोपृथ्वीरूपाम्।

अजा माया को कहते हैं तेज जल पृथ्वी रूप में रक्तादि वर्ण से।

कल्पनोपदेशाच्च मध्वादिवदविरोधः १०

कल्पनया उपदिश्यते मध्वादौ सूर्ये प्रतीकोपासनावद विरोधः अजायाः मायात्वे।

उपासना के लिये कल्पना का उपदेश है इस लिये अजा का माया पर्याय है जैसे प्रतीकोपासना में मधु सूर्यादि वाचक हैं।

न सांख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठित इति श्रुते रपि सांख्यमतम्प्रधानकारणमिति न तत्राकाशात्मनो रधिकतत्व प्रवेशात व पञ्चविंशतितत्वाधिक्यदोषः।

पच्चीस ही तत्व मानते है कापिल मत में पञ्च पञ्च जनाः आकाशः इस श्रुति से सिद्ध करते हैं सो सम्भव नहीं आकाश आत्मा बढ़ जाती है वह उनके सिद्धान्त से विरुद्ध है।

प्राणादयो वाक्यशेषात ॥ १२ ॥

अपरे प्राणादयो व्याख्यायन्ते वाक्यशेषेणास्तु तन्न विरुद्धमस्माकम्।

और भी वेदाचार्यों ने पञ्चप्राण कहे हैं उस से कुछ विरोध नहीं होता है किन्तु कपिल मत में तत्वों में २५ संख्या गिनने से तत्वाधिक होता है और प्रधान अचेतन कारण है इस में विरोध है।

ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

ज्योतिषा अन्नशब्दो प्राणवाचकः ज्योतिषै केषाम्प्राणे

संख्यापूर्यतेऽसत्यपि संख्याने असत्यपि प्राणशब्दे एकेषां ज्योतिषा एव अन्ने प्राणे संख्या पूर्यते यथा तथात्रापि ।

किसी के मत मे ज्योति से प्राण संख्या पांच पूर्ति होता है अन्न प्राण को कहते हैं अन्न प्राण लेने से वैसे पञ्चजन शब्द प्रधान परक नहीं है माया पर है ।

कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ॥ १४ ॥

कारणत्वेन यथाकाशादि ब्रह्मणि व्यपदिष्टः ।

कारण होने से ब्रह्म शब्द आकाश को कहते हैं वैसे आन पद श्रुति में जानना ।

समाकर्षात् ॥ १५ ॥

असत्पक्षो न भवति नापि प्रधानचेतनस्य समाकर्षादनुप्रवेशात् ।

ईश्वर प्रविष्ट होता है बिना चेतन के संसार बनाना सम्भव नहीं है इससे प्रधान वाद और असद्वादनिरस्तजानिये ।

जगद्वाचित्वात ॥ १६ ॥

यस्य वै तत्कर्मेति जगत् अवधार्यते अत ईश्वरादन्यो न कर्तेति गम्यते ।

जिसका यह जगत कर्म है वह ईश्वर ही जगत का करता है ।

जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥

उपासनात्रैविध्येनेदम्पूर्वम्व्याख्यातम् ।

उपासक भेद से त्रिविध उपासना कहा है उसमें ब्रह्मोपासना सिद्धान्त है पूर्व में कहा है ।

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

ब्रह्मविषयकं वाक्यं जैमिनिमते प्रश्नव्याख्यानाभ्यामन्येप्यामनन्ति ।

इसमें प्रश्नोत्तरसे ब्रह्म विषयक वाक्य है जैमिनि कहते है और भी इनकेसहमत हैं

वाक्यान्वयात् ॥ १९ ॥

वाक्यान्वयादपि ब्रह्मैव ।

सब वाक्यों का इसमें अन्वय होजाता है ।

प्रतिज्ञासिद्धे र्लिङ्गमाश्मरथ्यः ॥ २० ॥

प्रतिज्ञासिद्ध्यर्थं प्रियः प्रियो भवति गार्गि चेति लिङ्गम् इत्याश्मरथ्य आचार्यः ।

आश्मरथ्य कहते हैं प्रतिज्ञा सिद्धि का लिङ्ग है गार्गी सम्वाद से ।

उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ २१ ॥

प्राणान्त्यजत एकीभावो भवति चेति औडुलोमिः ।

शरीर पात होने से जीव ब्रह्म का एक ही भाव होता है ब्रह्म ज्ञानी को यह बात ओडुलोमी मुनि कहा है ।

अवस्थिते रिति काशकृत्स्नः ॥ २२ ॥

जीवाभिन्नं ब्रह्मेति काशकृत्स्नः ।

जीवरूप सो स्थित है ब्रह्म है काशकृत्स्न ने कहा है ।

प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपराधात् ॥ २३ ॥

प्रकृतिरपि ब्रह्मसहकारेण कारणम्प्रतिज्ञादृष्टान्तयोरुप

रोधाभावात् ।

ब्रह्म सहकार से प्रकृति भी कारण है प्रतिज्ञा और दृष्टान्त से सिद्ध होता है।

अभिध्योपदेशाच्च ॥ २४ ॥

सृष्टिसंकल्पोपदेशात् पुनः प्रकृतिस्सहकारिणी ।

सृष्टि का संकल्प करने से शक्ति सह कारिणी होती है इससे पुरुष प्रकृति का योग कारण है।

साक्षाच्चोभयाम्नानात् ॥ २५ ॥

प्रकृतिपुरुषौ चोभौ सृष्टावाम्नातौ ।

प्रकृति पुरुष दोनों मिलके संसार का कारण हैं।

आत्मकृतेः परिणामात् ॥ २६ ॥

आत्माकारानुकृतेन परिणमनात् प्रकृतिरपि ब्रह्माभिधीयते ।

आत्माकार बन जाती है इससे भी ब्रह्म प्रकृति हैं ।

योनिश्च हि गीयते ॥ २७ ॥

प्रकृतिर्योनिरपि गीयते ब्रह्मशक्तिरभिधीयते ।

ब्रह्म योनि भी प्रकृति कहाती है इससे ब्रह्म या ब्रह्माभिन्न विचित्रा शक्ति है।

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

एतेन सर्वे पक्षा व्याख्याताः वीप्सया समाप्तिर्लक्ष्यते ।

इस प्रबन्ध से सब पक्ष कहे हैं।

इति ब्रह्मसूत्रे प्रथमाध्याये चतुर्थ पादः समाप्तः ।

---

# अथ द्वितीयाध्याये प्रथम पादः प्रारभ्यते ।

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोष प्रसङ्गात् ॥ १ ॥

स्मृत्यनवकाश दोष इति न वक्तव्यम् मन्वादिस्मृतेरनव काशप्रसङ्गात् मनुरवदत्तद्भेषजमिति श्रुतेः ।

कपिल देव का ज्ञान वेद में लिखा है इससे विरोध हो ऐसा नहीं कह सकते।हो मनु को भी वेद सर्वज्ञ कहा है इससे मनु में ईश्वर सिद्धि लिखी है ।

इतरेषाञ्चानुपलब्धेः ॥ २ ॥

इतरेषां महदादीनां कारणत्वानुपलब्धेः न प्रधानकारण वादो युक्तः ।

प्रधान कारणवाद श्रुति विरुद्ध है ।

एतेन योगः प्रत्युक्तः ॥ ३ ॥

कापिलमतोपमर्देन पातञ्जलयोगोपि प्रत्युक्तःप्रत्याख्यातो ज्ञेयः।

कपिल मत खण्डन से पातञ्जल योग का भी खण्डन जानना ।

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

योगसांख्ययो र्न वैलक्षण्यं तथा त्वं शब्दात ।

योगसांख्य में तो विविध रूप प्रधान से विलक्षण जगत् हो सकता है एक रस ब्रह्म सो सम्भव नहीं है सो नहीं कहना वेद प्रमाण से सम्भव है सर्व रस ईश्वर है ।

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

मृदब्रवीदित्यत्राभिमानी वोपचर्यते ।

मिट्टी बोली इस जगह अभिमानी देव का ग्रहण है ।

दृश्यते तु ॥ ६ ॥

पुरुषजगतो वैलक्षण्यात चेतनाचेतनयोः इति ।

पुरुष और जगत को चेतना चेतन से विलक्षण है भी तो चेतन से नखादि गोमय से विच्छू की उत्पति देखने से ब्रह्म कारण है ।

असदिति चेन्न प्रतिषेधमात्रत्वात ॥ ७ ॥

असज्जगत्कार्यत्वादिति न प्रतिषेधमात्रत्वात ।

जगत् पूर्व में सत् था परन्तु कार्य के पहिले सत नहीं कहते हैं इस लिये असत् कहना भी कपिल मत में दोष नहीं हैं ।

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

अपीतौ प्रलये तद्वाद्विभागाभावप्रसङ्गात् असमंजसमत श्रौतम् ।

प्रलय में विभाग न होने से ब्रह्म कारण वाद का मत ठीक नहीं कारण कि कार्य तो अशुद्ध है शुद्ध कारण में मिलने से दूषित करता है जैसे दही दूध को करता है ।

नतु दृष्टान्तभावात् ॥ ९ ॥

नेदमसमञ्जसम् तु पुनः दृष्टान्तभावात कटकादयः सुवर्ण कार्याणि सुवर्ण न दूषयन्ति ।

जैसे सुवर्ण के वलय कार्य सुवर्ण को दूषित नहीं करता है वैसा जगत्कार्य ब्रह्म को दूषित नहीं करता है ।

स्वपक्षदोषाच्च ॥ १० ॥

प्रधाने कारणेपि ते दोषाः ।

प्रधान कारण वादियों को भी उनका कहा दोष है ।

तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्ष

प्रसङ्गः ॥ ११ ॥

औपनिषदे पुरुषे कारणे तर्को न युज्यते अनेक पुरुष व्यापारात् अन्यत्र प्रतिष्ठितो हि तर्क इति चेत्तथाप्यत्रा प्रतिष्ठितत्वेन न निर्मोक्षः ।

ब्रह्म कारण में तर्क नहीं चलता है अनेक पुरुष का तर्क भूत भविष्यत वर्तमान में एक रस होना सम्भव नहीं है कथ ञ्चित ब्रह्म से अति रिक्त भी है तो ब्रह्म विषय में तो अप्रतिष्ठितही तर्क है सिद्ध होता है ।

एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

ये न्ये काणादादयोपि शिष्टैमन्वादिरपरिग्रहाः समाहिताः वोद्धव्याः ।

इसी से न्याय वाले परमाणु कारण वादी भी जो मनु के असहमत है उनका भी खण्डन जानना ।

भोक्त्रापत्ते रविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥

भोक्त्रापत्तेरविभागश्चेदिति न लोकवत् जलवीचिवत् ।

ब्रह्म कारणवाद में भोक्ता भोग्य कल्पना असम्भव है सो नहीं कह सकते हैं लोक से सिद्ध है । जैसे जल और तरङ्ग के तरह से व्यवहार होता है ।

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

उपक्रमेणापि तत् ब्रह्मैव यद्विज्ञानेन सर्वं विज्ञातम्भवतीति ।

आरम्भ ब्रह्म से हुआ है "एकेन विज्ञातेन सर्वं विज्ञातं भवति इति" वह एक कौन है जिसके जानने से सब जाना जाता है ।

भावे चोपलब्धेः ॥ १५ ॥

भावादेव भावकार्यमुत्पद्यते मृदोः घटस्तन्तोः पटः न मृदन्तन्तुभ्यां व्यभिचरतः ।

भाव से भाव पैदा होता है मिट्टी से घट तन्तु से पट तन्तुपट का कारण तन्तु से भिन्न पट होते भी तन्तु ही है वैसे घट मिट्टी है ।

सत्वाच्चावरस्य ॥ १६ ॥

अवरस्य कार्यस्य कारणे सत्वमधीयते "सदेव सौम्येदमग्र आसीदिति" ।

पूर्व से कारण में कार्य स्थित है इससे भी ब्रह्म कारण है ।

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात ॥ १७ ॥

असद्व्यपदेशोपि श्रूयते इति चेन्न अव्याकृतेन धर्मेण व्यपदिश्यते कथम्वाक्यशेषातलोके व्याकृतं सदित्युच्यते ।

असत् भी कहा है कार्य को उसी श्रुति में वह नाम रूप नहीं होने से असत् कहा है ।

युक्तेः शब्दान्तराच्च ॥ १८ ॥

युक्तेः शब्दान्तरेणापि कारणे कार्यमिति ।

लोक शास्त्र युक्ति से कारण में कार्य स्थित है सब कोई जानता है जैसे दही घट कटक चाहने वाले कच्चा दूध मिट्टी सुवर्ण की तलास करता है दूसरी वस्तु नहीं तलास करता है ।

पटवच्च ॥ १९ ॥

पटवत्प्रभृतिर्भवति वेष्टितः पटः पटो न ज्ञायते अनावृतः पटः पटतन्तुकार्यमिति ज्ञायते ।

वेष्टन मे लपेटा पट को अन्य द्रव्य है नहीं जाना जाता वेष्टन तो वाहर होने से पसार ने सो पटतन्तु ज्ञान पृथक होता है पूर्व पटाज्ञानकारण विचारणे से तन्तु ज्ञान पर्य्यन्तयावद्व्यवहार पट ही रहेगा तन्तु में किन्तु पट नहीं है ।

यथा च प्राणादि ॥ २० ॥

यथा प्राणादयः पृथङ् नियता कार्याणि कुर्वन्ति समाधौ जीवनरूपमेव ।

समाधि में पञ्च प्राण केवल जीवन कार्य करता है उठना बैठना नहीं करता है ।

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

ब्रह्मकारणवादे हितादि अकरणदोषप्रसङ्गो भवति ।

चेतन ब्रह्म है कारण तो अहित कैसे होता है इस से ब्रह्मकारण वादिओं को दोष होता है ।

अधिकन्तु भेदनिर्देशात ॥ २२ ॥

तु पुनः अधिकं भेदनिर्देशात न दोषः विम्वप्रतिविम्व भावादेकस्यैव द्वे विम्वम् ।

एक ब्रह्म में विम्व प्रति विम्व से पृथक व्यवहार मालूम पड़ता है दर्पण में प्रति विम्व ग्रीवास्थ विम्ब है जीव ब्रह्म दोनोंको लेकर सृष्टि होती है जब जीव है तो अज्ञान से शुभा शुभ कर्म के सामर्थ्य नहीं होता है वह जब ब्रह्म है तो अशुद्धिसंभव नहीं है ।

अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

यथा मण्यश्मनोर्भेदः तद्वत् ब्रह्मेति तदुभयौ जीवेश्वरौ पृथग्गुणदोषैरनुपपत्तिर्नास्ति चेत्यर्थः।

जैसे हीरा और पत्थर है गुण दोष भिन्न है तो ऐसे दोष उस में कोई हानि नहीं देखते हैं।

उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

कर्तुस्साधनस्योपसंहारो दृश्यते तन्नास्ति ब्रह्मणि इति चेन्न क्षीरवदिति दर्शनात्।

जैसे दुध साधक नहीं करता है दही बनाने में वैसा ब्रह्म भी संसार बनाने में साधन नहीं चाहता है।

देवादिवदपि लोके ॥ २५ ॥

लोके देवादीनामपि सामर्थ्यं दृश्यते संसारकरणे तद्वदीश्वराच्च।

देवादिकों की भी सृष्टि करलेते हैं विना साधन से जैसे विश्वामित्र ने ब्रह्मादि को रचा है यह सुना गया है।

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

पुनराक्षिपति ब्रह्मकारणवादं कृत्स्नस्य ब्रह्मणः प्रसक्ति निरवयवत्वादथवा चैकदेशस्य सावयवत्वादुभयथापि विरोधः कृत्स्ने कार्ये कारणे ब्रह्मणि वाच्यवाचकभावा श्रुतिर्विरुद्धा सावयवत्वे निरवयवत्वप्रतिपादिका वा।

सम्पूर्ण जगत् ब्रह्म है तो कार्य कारण एक ही है कौन किस को उपदेश करता है ईश्वर के एक देश जगत कार्य है एसा कहो कि ब्रह्म निरवयव है श्रुति से विरोध होगा श्रुति में निरवयव ब्रह्म कहा है।

श्रुतेस्तु शब्दमूलत्वात ॥ २७

श्रुतिर्नविरुध्यते या शब्दकारणं ब्रह्म ब्रूते सैव निरवयवत्वं निष्कलत्वम्प्रतिवोधयति।

जो शब्द ब्रह्म कारण कहते है वहीं निरवयव कहते हैं शब्द जड़ है श्रुति का तो ब्रह्म कारण होते सावयव निरवयव नहीं कह सकते हैं।

आत्मनि चैनम्बिचित्राश्च हि ॥ २८ ॥

आत्मन्येव बिचित्रा सृष्टिरुपलभ्यते"न रथाः न रथयोगाः" इत्याद्या स्वप्ने सम्बध्यते स्वयमेवेति जीवसृष्टिदर्शनात ब्रह्मणि कीदृशीशक्तिरिति किमुतवक्तव्यमस्ति इति।

स्वप्न में अनेक सृष्टि जीव क्षण मात्र में तयार करता है तब ब्रह्म के क्या कहना है।

स्वपक्षदोषाच्च ॥ २९ ॥

प्रधानकारणवादेपि एते दोषास्सन्ति।

प्रधान कारणवादे में भी यह सब दोष है।

सर्वोपेता च तद्दर्शनात ॥ ३० ॥

सापरदेवता ब्रह्म सर्वशक्त्युपहिता।

ब्रह्म सर्व शक्तिमान् है यह श्रुतियों से सिद्ध है इससे ब्रह्म कारण है।

विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

विकारप्राप्ते ब्रह्म कारणन्नेति चेन्न पूर्वमेवोक्तमपि कार्य कारकत्वं ब्रह्मण इति।

ब्रह्म में विकार दोष होगा सो नहीं है हाथ पेर नहीं होते भी हाथ पेर का काम करते है इससे अविकारि बताया है।

न प्रयोजनवत्वात् ॥ ३२ ॥

ब्रह्मकारणं न जगतः प्रयोजनाभावात।

बिना प्रयोजन ब्रह्म जगत को कैसे बना सकते हैं।

लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

लोके राजानः लीलार्थमेव किञ्चित्कार्यमुपाददते तद्वत्।

जैसे राजा लोग खेल खेलते हैं चोपड़ सतरंज इत्यादि इसी प्रकार ब्रह्म शक्ति का लीला है।

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥

विषमदृष्टिदोषनिर्दयतादोषौ नेश्वरस्य जगन्निर्माणे कर्मसापेक्षत्वात्।

ब्रह्म को विटूकमि बनाने में दोष नहीं होता है ईश्वर जीव को कर्म सापेक्ष्य जन्म देता है।

न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

कर्मविभागोनास्तीति न वक्तव्यमनादित्वात् जगतइति।

कर्म पहिले न था ऐसा न कहो जगत अनादि होने से कर्म था शुरू कबसे है यह सिद्धान्ती ने सिद्ध नहीं किया है।

उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

एतद्युक्ति युक्तमुपलभ्यते अथ मुक्तव्यवस्था न स्यात्केषाञ्चिदाभिमते ।

अनादि नहीं मानने से मुक्तों का पुनर्जन्म होना सम्भव है इससे अनादि सिद्ध होता है।

सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

अस्मिन् ब्रह्मकारणवादे सर्वधर्मोपपत्तेः पुनः सिद्धान्तितोऽस्माभिरित्युपसंहृतः ।

इस ब्रह्मकारणवाद में सब धर्म उपयुक्त होजाते हैं किसी पर दोष नहीं होता है इस वास्ते सूत्रकार ने समाहार करके उपसंहार किया इस वास्ते पुनः हमने इकट्ठे करके सब सिद्धान्त को लिखा।

इति ब्रह्मसूत्रे द्वितीयाध्याये प्रथम पादः समाप्तः ।

---

## अथ द्वितीयाध्याये द्वितीय पादः प्रारभ्यते ।

रचनानुपपत्तेश्चनानुमानम् ॥ १ ॥

रचनानुपपत्तेर्हेतो प्रधानं कारणमिति नानुमातव्यमचेतनस्य प्रधानस्य चेतनकर्तृकत्वासम्भवात् ।

चेतन जगतको अचेतन प्रधान कारण असम्भव है इसलिये प्रधान का अनुमान नहीं करना योग्य है ।

प्रवृत्तेश्च ॥ २ ॥

प्रवृत्तिरप्यचेतनस्य न घटेत चेतनाधिष्ठितस्यैव रथादेः कार्येप्रवृत्तिदर्शनात् ।

चेतनाधिष्ठित रथ शकटादि के कार्य में प्रवृत्ति देखने से अचेतन प्रधान चेतन का कारण नहीं हो सकता है ।

पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥

यथा पयो वत्सविवृद्धयर्थम्परिणमते इति चेत्तत्रापि "योऽप्सु तिष्ठन्निति"।

जल के भीतर रहते हुए प्रेरणा करते है इस से सिद्ध हुआ कि चेतन सब जगह है पञ्चभूत के अन्तर ।

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

प्रधानस्य जडत्वाच्चेतनस्यानपेक्षत्वात् परिणमनापरिणमनयोर्व्यवस्थिति र्न स्यात् ।

पुरुष उदासीन है चेतन जड़ है जड़ कैसे चेतन रूप से परिणत हो सकता है आप ही नहीं बन सकता है।

अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

तृणादिवदपि प्रवृत्तिर्नैयुज्येत धेन्वैव ह्युपभुक्तं तृणादि क्षीरी भवति नानडुहेति ।

तृण खाने से दुग्ध होता है तो बैल के दूध क्यों नहीं होता है इस लिये चेतन विना प्रकृति कुछ नहीं कर सकती है चेतन का गुण मात्र है ईश्वराज्ञा से सब होता है।

अभ्युपगमेप्यर्थाभावात् ॥ ६ ॥

प्रधानपरिणमस्वीकारेपि प्रयोजनाभावो ज्ञेयः ।

जैसे प्रकृति किसी के विना सहारे काम करती है तो पुरुष भोग वास्ते होती है यह कैसे आप समझ लिया इस तरह से बहुत दोष है।

पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥

पुरुषवत् पङ्ग्वन्धकवत् अश्मवदयस्कान्तवत् प्रवृत्तौ प्रतिज्ञाहानिः सिद्धान्तविरोधश्च ।

प्रधान अन्धे के समान और पुरुष पङ्गु के समान मिलकर आपस में जगत्कार्य करते हैं अथवा लोह चुम्बक से लोहे की तरह पुरुषसान्निध्य से प्रकृति स्वयं कार्य में प्रवृत्त होती है तो प्रतिज्ञा हानि होती है पहले स्वयं प्रकृति मानते हैं अब पुरुष सहायक कहने लगे इससे बहुत दोष है प्रधान कारण वाद में।

अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

अङ्गाङ्गीभावोपि न घटेत दुःस्साध्यत्वात ।

सत रज तम के साम्यावस्था को प्रकृति कहते हैं विना कारण उपचयापचय हो नहीं सकता है महत्तत्वादि का गुण के होने विना देवादिसृष्टि का सम्भव नहीं हो सकता है इससे प्रधान कारण नहीं है।

अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

ज्ञशक्तिवियोगात अनुमितिरपिवृथैवरचनानुपपत्त्यादयः दोषासम्भवेयुः

चेतन छोडने से प्रधान का अनुमान भी व्यर्थ है रचनादि का अनुपपत्ति दोष फिर से स्थित होजायगा।

विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

विरोधात् श्रुतिविरोधाच्च प्रधानकारणवादो न सम्मतः

प्रधान कारण वाद में, ७ इन्द्रिय किसी जगह१० इन्द्रिय कहाहै कहीं पर३ अन्तः करण और कहीं पर १ अन्तःकरण कहा है इससे परस्पर विरोध है।

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

काणादमतं दूषयति ह्रस्वपरिमण्डलाभ्याम्महद्दीर्घ वज्जगदुत्पद्यते तन्नयुक्तमिति।

गुरु और बडा जगत ह्रस्व व परिमण्डल से तैयार होता है यह आगे कहेंगे सो युक्ति से ठीक नहीं है जैसे परमाणुगत गुण अणुत्व ह्रस्वत्व द्व्यणुक में नहीं होता है उत्तरोत्तर दीर्घत्वमहत्व मानते हैं काणाद वैसे चेतन से अचेतन होता है तो क्या बुराई है अपना दोष नहीं देखते हैं।

उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

आत्मसमवायि परमाणुसमवायि वा अदृष्टकर्म अतोपि परमाणुकारणाभावः।

किसी तरह मानो समवाय सम्बन्ध जीव से मानो या परमाणु से मानो सृष्टि सम्भव नही है परमाणु से मानो तो निरवयव निर्गुण क्षण एक परमाणु रहता है आत्मा से मानो तो मन प्रधान परिणाम परमाणु अब ही नहीं बना है तो अदृष्ट कर्मों नें कैसे मन के साथ सम्बन्ध किया।

समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

समवायसम्वन्धोपि अन्येन सह नासम्वध्येत साप्यन्येन सोप्यन्येनेति चानवस्था प्रसङ्गात् ।

समवाय सम्बन्ध स्वीकार किया तौ भी अनवस्था दोष नहीं छूटता है ।

नित्यमेव च भावात् ॥ १४ ॥

अणवः प्रवृत्तिस्वभावा वा निवृत्तिस्वभावा वा नित्या एव तदा सर्गाभावप्रलयाभावौ प्रसज्येयाताम् ।

परमाणु प्रवृत्तिस्वभाव निवृत्तिस्वभाव उभयस्वभाव अनुभय स्वभाव हो सकता है चारों तरह के पक्ष में संसार बन नहीं सकता है प्रवृत्ति में लय नहीं होगा निवृत्ति में उत्पत्ति नहीं होगी ।

रूपादिमत्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

परमाणूनां रूपादिमत्वाच्च दर्शनाद्विशुद्धम् नित्यत्वम कारणत्वमरूपत्वञ्च ।

जग रूपवत् देखने से रूपवाला परमाणु से बना है यह सम्भव है परमाणु कारण नहीं और नित्य नहीं अरूप नहीं है कार्य के तुल्य है गुणों से कारण होते भी ।

उभयथा च दोषात् ॥ १६ ॥

पृथिव्यादिपरमाणुगुणाः स्थूलाः सूक्ष्माः सूक्ष्मतराः सूक्ष्मतमाः तारतम्येन गन्धादीनां समारम्भानारम्भे चोभयथापि दोषप्रसङ्गः पृथिव्यादिगुणे ।

गन्धादि युक्त जो पृथिव्यादि वह कार्य में गुणोपचयापचय करै या न करै दोनों में दोष है सब मिल के करै तो सब पृथिवी जलादि में गन्धादि पांच पांच गुण होना चाहिये नहीं करै तो पृथिवी में भी गन्धमात्रही होना चाहिये ।

शिष्टेश्च ॥ ६२ ॥

शिष्टशासनम्विधानमिति यावत् विहितत्वाविशेषात् समुच्चयोऽङ्गवत् ।

काम्य कर्म में समुच्चय युक्त है गोदोहन के संग्रह समाहार में नहीं है।

समाहारात ॥ ६३ ॥

समाहारोपि दृश्यते काम्यासु ।

काम्य कर्म में समाहार कहा है।

गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

उद्गीथादिषु गुणसाधारण्यं श्रूयते ।

ओंकार उद्गीथ का साधारण फल श्रवण है इससे भी समुच्चय युक्त है।

न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

नवेति वक्तव्यं सहभावस्याश्रुतिरिति ।

उद्गीथोपासना में समाहार का श्रुति नहीं सो न कहना हैं।

दर्शनाच ॥ ६६ ॥

दर्शयति च श्रुतिरसहभावम् प्रत्ययानाम् एतेन यथो भयमुपासनानां ।

काम्यो पाय से न एक ही किन्तु दोनों करे।

इति ब्रह्मसूत्रे तृतीयाध्याये तृतीयपादः समाप्तः ।

---

# अथ तृतीयाध्याये चतुर्थ पादः प्रारभ्यते।

पुरुषार्थोऽतः शब्दादिति वादरायणः ॥ १ ॥

अतोस्माद्वेदान्तविहितादात्मज्ञानात्पुरुषार्थो मोक्षः इति वादरायणिराचार्यः ब्रूते कस्मात् शब्दाच्छ्रुते शोकमात्मवित्तराति।

श्रुति प्रमाण से बादरायण आचार्य कहते हैं कि मोक्ष वेदविहित आत्म ज्ञान से होता है।

शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥

पुरुषार्थस्य कर्मशेषत्वात् पुरुषस्यार्थवाद इति जैमिनि र्मन्यते।

कर्म शेष पुरुषार्थ है बिना कर्म के मोक्ष नहीं ज्ञान से मोक्ष प्रशंसा मात्र है य जैमिनि कहते हैं।

आचारदर्शनात् ॥ ३ ॥

कर्मणैव च संसिद्धिमास्थिता जनकादयः जनकोहवैदेह बहुदक्षिणेन यज्ञेनेजे एतेन कर्मणा कैवल्यमिति जैमिनिः।

कर्म से मोक्ष जैमिनि मानते हैं।

तच्छ्रुतेः ॥ ४ ॥

"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम् भवति" इति कर्मशेषत्वश्रवणात्।

ज्ञान कर्म से मोक्ष जैमिनि मानते हैं।

समन्वारम्भणात् ॥ ५ ॥

तं मोक्षं विद्याकर्मणी समन्वारभेते इति।

मोक्ष विद्या ज्ञान और कर्म से होता है।

तद्वतो विधानात् ॥ ६ ॥

विद्याकर्मवतोऽधिकारो विधीयते।

विद्या और कर्म करने वाला अधिकारी होता है।

नियमाच्च ॥ ७ ॥

कुर्वन्नेवेह कर्माणीति नियमात्।

आजन्म काम करते रहो ऐसा नियम से विद्या और कर्म से मुक्ति होती है।

अधिकोपदेशात्तु वादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

अधिकोपदेशात् शारीराज्जीवादधिकस्येश्वरस्योपदेशात् न कर्मशेषत्वमीश्वरस्य तद्दर्शनात् वादरायणस्यैवंमतं कैवलज्ञाना त्कैवल्यमिति।

ईश्वराभिन्न जीव को कहा है इससे केवल आत्म ज्ञान से मोक्ष होता है इसमें बहुत श्रुति प्रमाण हैं।

तुल्यं तु दर्शनम् ॥ ९ ॥

अकर्मशेषत्वेपि तुल्यदर्शनम्।

ज्ञान होने पर कर्म नहीं करना ऐसी श्रुति भी बहुत हैं।

असार्वत्रिकी ॥ १० ॥

कर्म श्रुतिर्न सार्वत्रिकी ।

विद्या कर्म से मोक्ष कहने वाली श्रुति सर्व ब्रह्म विद्या में नहीं कहा है ।

विभागश्शतवत ॥ ११ ॥

यद्यप्ययुक्तं विद्याकर्मणी समन्वारभेते इति सतु विभागः अन्यविद्यानियोगायात्यन्तं कर्म चेति यथाशतमाभ्यान्दीयतामित्यत्र पञ्चाशतम् विभज्य एकैकस्मै दीयते तद्वत् ।

विद्या और कर्म दोनों मिलकर मोक्ष मार्ग के प्रवर्तक होते हैं यद्यपि यह बात है तथापि पृथक् २ कारण है जैसे सौ रुपया इन दोनों को दो इस वाक्य में पचास २ विभाग करके दिया जायगा वैसे कर्म से विद्या प्राप्ति विद्या से मोक्ष कर्म केवल मन शुद्धि का कारण है ।

अध्ययनमात्रवतः ॥ १२ ॥

अध्ययनमात्रमव कर्मगृह्यते ।

पठनमात्र कर्म स्वीकार है ।

नाविशेषात् ॥ १३ ॥

कुर्वन्नित्यत्र ना विशेष्यते विद्वानिति ।

कर्म करते रहना जन्मभर य ज्ञानी को उपदेश नहीं करता है ।

स्तुतयेऽनुमतिर्वा ॥ १४ ॥

विद्यास्तुतये वानुमितिः ।

विद्या स्तुति के लिये कहा है कि ज्ञानी को कर्म करते हुए भी कर्मफल नहीं लगता है।

कामकारेण चैके ॥ १५ ॥

कामनां पुत्रैषणां न कुर्वन्ति किम्प्रजयेत्यादि।

ज्ञानी कामना नहीं चाहता फिर कर्म क्यों करेगा।

उपमर्दश्च ॥ १६ ॥

क्रियाकारकफललक्षणस्य सर्वस्य प्रपञ्चस्याविद्याहेतोरविद्याकृतस्य विद्याप्रभावात्स्वरूपोपमर्दमामनन्ति।

विद्या से अविद्याकृत कर्म को नाश ही लिखा है।

ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

ऊर्ध्वरेतस्वपि नैष्ठिकेषु विद्यया कर्मोपमर्दमामनन्ति हि यतः शब्दे वेदे श्रूयते।

नैष्ठिक ब्रह्मचारी का भी कर्म कामना त्याग है।

परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

ब्रह्मचारिणो वेदे परामर्शोज्जैमिनिराचार्यो ब्रूते न विधिमिति अचोदना चापवदति हि।

ब्रह्मचारी का वेद में परामर्श है विधि नहीं है ए जैमिनि आचार्य विधि नहीं मानते हैं सो बात नहीं है जाबाल ने ब्रह्मचर्य से संन्यास कहा है।

अनुष्ठेयं वादरायणः साम्यश्रुतेः ॥ १९ ॥

तुल्यश्रुतेरनुष्ठेयम् ब्रह्मचर्यमिति वादरादणो मन्यते।

श्रुति प्रमाण होने से ब्रह्मचर्य विधान है य बात बादरायण आचार्य मानते हैं।

विधिर्वा धारणवत् ॥ २० ॥

समिधादिधारणवद् विधिरेव ।

ब्रह्मचर्य विधानसिद्ध होता है।

स्मृतिमात्रमुपादानादिति चेन्नापूर्वत्वात ॥ २१ ॥

अर्थवादविधानमिति न अपूर्वत्वाद्विधिः ।

प्रशंसामात्र नहीं अपूर्व होने से विधि समझना चाहिये ।

भावशब्दाच्च ॥ २२ ॥

उद्गीथमुपासीतेति तस्य विधिः श्रूयते ।

उद्गीथउपासना करना विधि वाक्य है।

पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

पारिप्लव आख्यानम् तदर्था विद्येति न विशेषितत्वाद्विद्यायाः ।

कथा वेद में जो है सो विद्या प्राप्त होने के समीप वर्णन किया है इस लिये विद्योपयुक्त है।

तथा चैकवाक्यतोपबन्धात ॥ २४ ॥

एक वाक्यतोपबन्धादाख्यायिका ।

एक वाक्य होने के लिये भी कथानुबन्ध है ।

अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

अत इति प्रतिज्ञासूत्रं सूचयति पुरुषार्थोऽतश्शब्दात् एतेनाग्नीन्धनाद्यनपेक्षा सिद्धा ज्ञानिनाम् ।

वेद से सिद्ध हुआ कि आत्म ज्ञान से मुक्ति होती है कर्म से केवल नहीं ।

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

यावत् ज्ञानं सर्वापेक्षा यज्ञादीनां श्रुतेरश्ववत् ।

मुमुक्षु को ज्ञान पर्यन्त यज्ञादि विहित है जैसे घोड़े हल में नहीं जोते जाते पर रथ में तो जुतते हैं ।

शमदमाद्युपेतस्स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥

अन्तरङ्गैः शमदमादिभिरुपेतो विफलं मनसि सन्धाय यज्ञादयोपि यावद्ज्ञानमवश्यमनुष्ठेयाः ।

शमदमादि युक्त फलकी इच्छा न करता हुआ मुमुक्षु यज्ञ आदि करै जब तक ज्ञान न हो तब तक हो करै ।

सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

प्राणात्यये सर्वान्नस्यभक्षणं श्रुतेर्बलात् ।

प्राण संकट में अपवित्र अन्न भी खा सकता है ।

अबाधाच्च ॥ २९ ॥

सत्वशुद्धावाहारशुद्धिरित्यस्यापि बाधो न ।

भक्ष्य निषेध प्राण संकट में नहीं है ।

अपि च स्मर्यते ॥ ३० ॥

स्मृतिरपि तथा प्रमाणं जीवतात्ययमापन्नो योन्नमत्ति यतस्ततः लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।

प्राण सङ्कट में अपवित्र अन्न खाने से पाप नहीं लगता है जैसे कमल दल को जल स्पर्श नहीं करता है ।

शब्दश्चातोऽकामकारे ॥ ३१ ॥

कामकारनिवृत्तिप्रयोजनममेध्यभक्षणम् ।

अमेध्य खाना प्राण संकट में ही ठीक है अन्यथा पाप है ।

विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

यज्ञादीनां विहितत्वाच्चाश्रमकर्मापि कुर्यात यज्ञादिन कामः ।

मुमुक्षु भी ज्ञान प्राप्ति के लिये यज्ञादि करे ।

सहकारित्वेन च ॥ ३३ ॥

विद्यासहकारित्वेन विधेया यज्ञाः ।

विद्या के सहायक हैं इस लिये यज्ञादि करना ।

सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

विद्याविद्योभयपक्षेपि यज्ञाः उपास्याः ।

अज्ञानी कामना के लिये और ज्ञानी ज्ञान के लिये यज्ञ करे ।

अनभिभवञ्च दर्शयाति ॥ ३५ ॥

आश्रमिणां यज्ञानुष्ठानमनभिभवन्दर्शयाति सहकारित्वञ्च लिङ्गहेतुः ।

विद्या सहकारि यज्ञ है यही लिङ्ग नाम हेतु है उभय लिंग सूत्र में कहे हैं ।

अन्तराचापि तु तद्दृष्टेः ॥ ३६ ॥

अनाश्रमिणामप्यधिकारो ब्रह्मविद्यायामश्रुतिप्रमाणात ।

विदुर की तरह आश्रम हीन को भी अधिकार है ज्ञान में श्रुति प्रमाण से ।

अपि च स्मर्यते ॥ ३७ ॥

सम्बर्तप्रभृतियोगिनो वर्णाश्रमविहीनाश्च स्मर्यन्ते ।

वर्णाश्रम हीन अवधूत भी ज्ञानी हैं ।

विशेषानुग्रहश्च ॥ ३८ ॥

देवविद्यानाम्विशेषानुग्रहश्च तत्रानाश्रमिषु दृष्टः ।

आश्रम हीन पर देवतानुग्रह किया है ।

अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

अनाश्रमिणोपि ज्यायान् हेतुदर्शनात ।

लिङ्ग नाम हेतु श्रुति प्रमाण से आश्रम हीन भी ज्ञान का अधिकारी है ।

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥४०॥

तद्भूतस्यनैष्ठिक ब्रह्मचर्याधिगतस्य नातद्भावो ब्रह्मचर्या-

त्यागः नियमात् तद्रूपाभावेभ्यः ब्रह्मचर्यादित्यागाभावानाम् इति जैमिनिबादरायणाभ्यामाम्नातः।

नैष्ठिक ब्रह्मचर्य से लौटना मना है।

न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥

प्रायश्चित्ताधिकारिकमपि न ब्रह्मचार्यवकीर्णी प्रायश्चित्तं चरितुमर्हति पतनानुमानादिति प्रायश्चित्तायोगात्।

नैष्ठिक ब्रह्मचारी स्त्री संग से पतित होजाता है।

उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥

उपपातकं मत्वा प्रायश्चित्तमेके ब्रुवन्ति यथामेध्यभक्षणे।

कोई उपपातक मानकर प्रायश्चित्त कहा है सो प्रमाद से करने पर मोह बुद्धि पूर्वक को तो फेर प्रायश्चित करके नैष्ठिक पद पर नहीं होगा।

बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

अवकीर्णी ब्रह्मचारी कृत प्रायश्चितोपि बहिस्कार्यः स्मृत्याचाराभ्यां प्रमाणम्।

स्मृति से और आचार प्रमाण से पतित ब्रह्मचारी को खान पान से पृथक् कर देवे।

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

यज्ञफलं स्वामिन इति फलश्रुतेरात्रेयो मन्यते।

यज्ञ फल स्वामि को होता है ऋत्विजादि को नहीं।

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

हि यतस्तस्मै परिक्रीयतेऽतः ऋत्विजः फलमिति औडुलोमिर्मन्यते ।

यज्ञ फल ऋत्विज से खरीदा जाता है इस लिये ऋत्विज का फल है यह बात औडुलोमि आचार्य कहते हैं ।

श्रुतेश्च ॥ ४६ ॥

श्रुतिप्रमाणेनापि ऋत्विक्कर्तृकयज्ञस्य यजमानफलं सिद्धिमितियाम्वै काञ्चनाशिष इति ।

श्रुति प्रमाण से भी स्वामी को यज्ञ फल होता है ।

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥

सहकारी अन्तर्विधिर्भवति तृतीयपक्षेण मौनेन सर्वतो निर्वेदमापन्नः प्रव्रजेदिति ।

सर्वत्र विरक्त होकर मौनादि साधन करके संन्यासी होना लिखा है ।

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥

बहुलायासकर्मदर्शनात् मौनादीनि चापि उपसंहर्तव्यानि कर्तव्यानि तु पुनस्संयमादीनि अपि ।

गृही सर्व कार्य करते यथा सम्भव दूसरा आश्रम मे लिखा है जो मौन संयमादि करते हरज नहीं है ।

मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥

यथा मौनादिगृहीकर्म तथा तदन्येषां वाणप्रस्थादी

नामपि ज्ञेयं श्रुतिबलात् ।

मौन संयम गृही को कहा है वैसे वाण प्रस्थादि को भी जानना श्रुति बल से श्रुति ने मौन संयम सब को वानप्रस्थादि को इन्द्रिय जय कहा है ।

अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥

विद्वान्बालवदात्मानमप्रकाशन्नेव चरेत् अवधूतः ।

ज्ञानी जानते हुए भी अपने को बालक की तरह प्रकाश नहीं करते हुए विचरते है ।

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

अत्रैव ज्ञानम् मुमुक्षूणां वेदान्तवाक्यात् किन्तु प्रतिबन्धकाभावे सति प्रतिबन्धके परत्र भवति ।

ज्ञान मुमुक्षु को ही होता है प्रतिबन्धक पाप न होने से ।

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥

न साधनतारतम्येन मुक्तिफलतारतम्यं ब्रह्मभावो मुक्तिरित्यवस्थावधृते निश्चयादभ्यस्यतेऽध्यायपरिसमाप्तिं द्योतयति ।

साधन के तारतम्य से मुक्ति फल में तारतम्य नहीं होता है ब्रह्म भाव ही मुक्ति है ।

इति ब्रह्मसूत्रे तृतीयाध्याये चतुर्थपादः समाप्तः ।

---

## अथ चतुर्थाध्याये प्रथम पादः प्रारभ्यते ।

आवृत्तिरसकृदुपदेशात् ॥ १ ॥

आब्रह्मदर्शनं श्रवणादीनामत्यावृत्तिः कार्या ।

जब तक ब्रह्म ज्ञान न हो तब तक बारम्बार मननादि करै एक बार करने से ज्ञान नहीं होता है ।

लिङ्गाच्च ॥ २ ॥

प्रमाणादपि अत्यावृत्तिःकर्तव्या ।

बहु पुत्र के लिये सूर्य किरण की उपासना कहा सो बारम्बार कहा है वही प्रमाण इसमें भी है ।

आत्मेति तूपगच्छान्ति ग्राहयन्ति च ॥ ३ ॥

जाबाला आत्मेति जानन्ति त्वम्वा अहमस्मिभगवो देवतेति अहंम्वै त्वमसिदेवते ग्राहयन्ति चश्रुतय आत्मानं एषतेआत्मासर्वान्तर इत्यादयोतोहि शारीरा भिन्नम्ब्रह्मेतिसिद्धम्।

आत्मा परमात्मा एक है यह जाबाल ने कहा है श्रुति ने भी कहा है शरीर के अन्दर रहने वाला ब्रह्म है ।

न प्रतीकेन हि सः ॥ ४ ॥

प्रतीकेषु न ब्रह्मदृष्टिः कल्प्या यथा रुचके कुण्डलदृष्टि र्नक्रियते स्वर्णदृष्टिस्तु क्रियते तथैव स उपासकः प्रतीके ष्वात्ममतिं न बध्नीयात् न हि स उपासकःतान्यात्मत्वेनाकलयेत ।

प्रतीक उपासना में ब्रह्म की तरह ध्यान न करे कारण कार्य कार्य को परस्पर अभेद नहीं है कारण कार्य सो अभेद होता ।

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

उत्कर्षात्सर्वातिशयाद्ब्रह्मदृष्टिः परस्परमभिमतः ।

सर्वोपरि ब्रह्म होने सो परस्पर आत्म दृष्टी लिखी है ।

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

आदित्यादि उपासना पुनर्ब्रह्माङ्गत्वादिति उपपत्तेः ।

सब प्रतीकोपासना ब्रह्मोपासना का अंग है ।

आसीनः सम्भवात् ॥ ७ ॥

आसीनस्यैवोपासना युज्यते सम्भवात् ।

बैठ के उपासना किया जाता है दूसरी अवस्था में मन स्थिर नहीं होता है ।

ध्यानाच्च ॥ ८ ॥

ध्यानहेतोः उपासनायाः तिष्ठत एवं सम्भवति ।

ध्यान से उपासना होता है सो ध्यान बैठने से होता है दौड़ में मनस्थिर नहीं रहता है ।

अचलत्वञ्चापेक्ष्य ॥ ९ ॥

पृथवीध्यायतीव इत्यत्राचलत्वमपेक्ष्य ध्यानमुक्तम् ।

अचल होकर ध्यान करना लिखा है ।

स्मरन्ति च ॥ १० ॥

स्मृतिरपि शुचौदेशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । इत्यादि स्थिरासनस्य ।

गीता में भी स्थिरासन के लिये कहा है।

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

स्वयं यस्यैकाग्रता तस्य नियमाभावः।

जिसका मन एकाग्र है उसके लिये बैठने का नियम नहीं।

आप्रयाणात्तत्रापि हि दृष्टम् ॥ १२ ॥

ध्यानमामरणादुक्तं प्रयाणकाले इत्यादि।

ब्रह्मोपासना गीता में मरण पर्यन्त कहा है।

तदाधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥१३॥

ब्रह्माधिगमे सति जनस्योत्तरपूर्वाघयोरश्लेषविनाशौभवतः तथोपदेशात् श्रुतेरिति।

संचित पाप से विश्लेष क्रियमाण का नाश होता है ब्रह्म ज्ञानी को।

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

पुण्यस्यापि पापवदश्लेषविनाशौ ज्ञेयौ अतः शरीरपातेतु मुक्तिः सिद्धा।

पुण्य भी ज्ञानी को स्पर्श नहीं करता है इसलिये देह पात होने से मुक्त हो जाता है पाप पुण्य जन्म कारण नहीं होने से।

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

सञ्चिते पुण्यपापे ज्ञानिनामनारब्धफले एव मरणात्प्राक् विनश्यतः नत्वारब्धफले।

जो संचित कर्म अपना फल आरम्भ नहीं किये हैं वही कर्म ज्ञानी के ज्ञान बल से नाश होते हैं ।

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात ॥ १६ ॥

नित्याग्निहोत्रादि कर्म तु तत्कार्याय ज्ञानाय भवति इति दर्शनात् श्रुतिबोधितात ।

नित्य अग्नि होत्रादि कर्म ज्ञानोत्पत्ति के लिये किया जाता है ।

अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

अतोग्नि होत्रादेरन्यापि साधुकृत्यापि एकेषाम्प्रधानादीनां श्रूयते सुहृद इति एवम्विधस्याग्निहोत्रादेर्विध्योपकर्तृत्व मुभयोर्जैमिनिवादरायणयोः सम्मतम् ।

नित्य कर्म ज्ञान पैदा करता है इसमें बादरायण जैमिनि दोनों का मत है ।

यदेव विद्ययेति हि ॥ १८ ॥

विद्यया सह कृतकर्म शीघ्रफलदम् किमुत केवलविद्येति ।

विद्या सहित कर्म शीघ्र फलता है यह पूर्व पक्ष सूत्र है ।

भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥

इतरे आरब्धफले पुण्यपापे भोगेन क्षपयित्वा मुक्तो भवति।

जो पाप पुण्य फलोन्मुख होचुके हैं उनको भोगने से मुक्त हो जाता है ।

इति ब्रह्मसूत्रे चतुर्थाध्याये प्रथमपादः समाप्तः ।

---

# अथ चतुर्थाध्याये द्वितीयपादः प्रारभ्यते ।

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

प्रयतः पुरुषस्य वाग्वृत्तिमनोवृत्तौ प्रतिपद्यते इति दृश्यते श्रूयते च ।

मरण समय में बोलबन्द होता है मनोबन्द के साथ सब इन्द्रिय बन्द होजाती हैं यह छान्दोग्य का प्रमाण है वाङ्मनसि सम्पद्यते ।

अत एव च सर्वाण्यनु ॥ २ ॥

अतोनन्तर सर्वाणि चेन्द्रियाणि मनसि सम्पद्यन्ते ।

इसके बाद सब इन्द्रिय चक्षु आदि मन में मिलती हैं ।

तन्मनः प्राण उत्तरात् ॥ ३ ॥

तन्मनः प्राणे लीयते प्राणानामुत्तरात् ।

वह मन प्राण में लय होता है प्राण तब तक ठहरता है ।

सोध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

स प्रधानः प्राणो जीवे लीयते प्रमाणेभ्यः ।

प्राणजीव में लीन होता है श्रुत्यादि प्रमाण से ।

भूतेष्वतः श्रुतेः ॥ ५ ॥

भूतसूक्ष्मेषु शरीरान्तश्चारिषु जीवात्मा प्रकृताविति यावत ।

अन्तः शरीर भूत प्रकृति में जीवात्मा लीन होता है।

नैकस्मिन्दर्शयतो हि ॥ ६ ॥

एकस्मिन्तेजसि न तिष्ठत्यात्मा हि यतः प्रश्नप्रति वचन दर्शयतः ।किन्तु सूक्ष्मभूतमात्रासु ।

सूक्ष्म पञ्च भूतों के मात्रा में प्राणयात्रा समय जीव ठहरता है केवल तेज में नहीं ए बात प्रश्नोत्तर से सिद्ध है।

समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य ॥ ७ ॥

आसृत्युपक्रमाद्विद्वदविदुषोः समानोत्क्रान्तिः अमृतत्वं तु कामवासनाः अनुपोष्य दग्ध्वा अनुत्क्रात्यैव सम्पद्यते स्वरूपा-वस्थानात् ।

ज्ञानी अज्ञानी की प्राणयात्रा तुल्य है कामना वाले को दग्ध कामंना वाले को अन्यत्र यान नहीं है स्वरूपावस्थान होता है सगुणोपासना वाले को वासना रहने से भोगोत्तर मोक्ष होता है भगवत्कृपा से।

तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

तत्तेज आदि वीजभूतं आपीतेः कैवल्यात तिष्ठति ।

अज्ञान कारण तेज आदि मोक्ष पर्यन्त रहता है।

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

सूक्ष्मन्तत्तेजोभवितुमर्हति प्रमाणतः तथोपलब्धेः सूक्ष्मनाड़ीप्रचारतः ।

जीवाश्रय तेजो भूतादि अति सूक्ष्म हैं।

नोपमर्देनातः ॥ १० ॥

स्थूलशरीरदाहादिना अतः सूक्ष्मत्वादेव न तेजो भूतादिआश्रयो जीवस्य प्रधानन्दह्यते ।

तेज आदि इसलिये नहीं दग्ध होते हैं सूक्ष्म होने से ।

अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥

अस्यैव जीवशरीरस्योपपत्तेरूष्मा श्रूयते ।

मरने पर शरीर ठण्डा होता है इसलिये चिह्न उष्ण शरीर है ।

प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

आत्मविदोऽनुत्क्रान्तिरिति चेन्न शाखस्य जीवोत्क्रान्तिः शाखान्तरे श्रूयते ।

ज्ञानी को लोकान्तर यान नहीं होता य नहीं कहना चाहिये कारण कि शाखान्तर ज्ञानी का प्राण प्रयाण कहा है ।

स्पष्टो ह्येकेषाम् ॥ १३ ॥

एकेषां शाखिनां स्पष्ट एषपन्था ज्ञानिनामुत्क्रान्त्यभावः नेति होवाच याज्ञवल्क्य इति ।

याज्ञवल्क्य के उत्तर से ज्ञानी का यात्रा नहीं हैं ब्रह्म भाव होता है ।

स्मर्यते च ॥ १४ ॥

अत्रस्मृतिरपि मानम् ।

यहां पर स्मृति भी प्रमाण है ।

तानि परे तथाह्याह ॥ १५ ॥

तानीन्द्रियाणि परे ब्रह्मणि लीयन्ते इति तथाह्याह ।

सब इन्द्रिय ब्रह्म में लय होता है एसे कहा है ।

अविभागो वचनात् ॥ १६ ॥

ब्रह्मणो जीवस्याविभाग एव वचनाच्छ्रुतेः ।

जीव ब्रह्म एक है श्रुति वचन से ।

तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्याच्चच्छेष गत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥

तदोको हृदयमग्रज्वलनं तेन प्रकाशितद्वारो ज्ञानी विद्यासामर्थ्यात् तच्छेष सर्वगतिज्ञानयोगात हार्देश्वरानुगृहीतश्शताधिकया नाड्या उत्क्रमते ब्रह्मरन्ध्रेणेति यावत ।

ज्ञानी जन विद्यासामर्थ्य से ईश्वरानुग्रह से सुषुम्ना नाड़ी को जानता हुआ ब्रह्मरन्ध्र से प्राण यात्रा करते है ।

रश्म्यनुसारी ॥ १८ ॥

ज्ञानी रश्म्यनुसारी समुत्क्रमते ।

ज्ञानी तेजो मण्डल से जाते हैं ।

निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयाति च ॥१९॥

निशि मृतस्याभिगमनं नेति चेन्न आजन्मनाड़ी सूर्यसंयोगात ।

रात्रि में मरने से ज्ञानी को सूर्य प्राप्ति नहींगे यह बात नहीं है नाड़ी से सूर्य से सम्बन्ध होचुका है शरीर का।

अतश्चायनेपि दाक्षिणे ॥ २० ॥

दाक्षिणायने मृतस्यापि अतो रश्मिप्राप्तिः।

दक्षिणायन मे भी मरने वाला ज्ञानी सूर्य मण्डल से जाता है।

योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥

योगिनः प्रत्यागमनं निषिध्यते अर्चिरादिना एते सांख्ययोगो कालं नियमतश्च श्रुतिविरोधाभावः।

योग सांख्य काल को नियम करते हैं श्रुति नाहीं करती हैं इससे विरोध नहीं है जो श्रुति में कही है सो अग्नि देवता लेजाने वाला है।

इति ब्रह्मसूत्रे चतुर्थाध्याये द्वितीयपादः समाप्तः।

---



## अथ चतुर्थोऽध्याये तृतीयपादः प्रारम्भः

अर्चिरादिना तत्प्रथितेः ॥ १ ॥

अर्चिरादिशब्देन तन्मार्गप्रसिद्धेः नाप्रसिद्धोनामा मार्गोऽन्वेष्टव्यः इति ।

अर्चिरादि बोधित मार्ग सूर्य मण्डलादि को ग्रहण करना दूसरा अप्रसिद्ध नहीं ।

वायुशब्दादविशेषविशेषाभ्याम् ॥ २ ॥

वायुशब्देन अविशेषेणाग्न्यादित्यादि लोकप्राप्तिर्बोध्यते क्रमेणोपासकस्येति ।

वायु अग्नि आदित्यादि लोक गमन उपासक को कहा है सो भी ठीक है ये भी अर्चिरादि है ।

तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥

तडित्तेजोभूत्वा वरुणस्सम्बध्यते ।

बिजली होते वरुणदेव से सम्बन्ध करता है ।

आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

वाहिकलिङ्गात्तल्लोका वाहीकाः ।

अचेतन होने पर भी ए सब जीव को लेजाने वाले अर्चिरादि मार्ग कहाते हैं ।

उभय व्यामोहात्तत्सिद्धेः ॥ ५ ॥

उभयोर्मार्गे तदुक्तयोर्व्यामोहाद्वाहिकदेवताः प्रतीयन्ते मार्गप्रापिकाः ।

दोनों मार्ग में वाहिक देवता प्रतीति होते हैं मार्ग पहुचाने वाले ।

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥

वैद्युतेन पुरुषेण वरुणेन सम्बन्ध्य ब्रह्म प्राप्यते ।

वैद्युत पुरुष वरुण से सम्बन्ध करते हुए ब्रह्म में मिलादेता है ।

कार्यं वादरिरस्य गत्युपपत्तेः ॥ ७ ॥

कार्यमेतद्ब्रह्म अस्य ब्रह्मणः गतिरुपपत्तेः गमनादिकं सम्भवति इति वादरिर्मनुते ।

कार्य ब्रह्म यह है सगुण होने से गत्यादि सगुण काल सम्भव है यह वादरि आचार्य मानते हैं ।

विशेषितत्वाच्च ॥ ८ ॥

तेषु विशेषः श्रूयते लोको गन्ता च ।

सगुण का लोक विशेष है रहने वाले भी अनेक रूप से रहते हैं इससे कार्य है ।

सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

सगुणे ब्रह्म प्रयोगः सामीप्यात् ।

स्वच्छ उपाधि धारण से सगुण भी ब्रह्म है ।

कार्यात्यये तदध्यक्ष्येण सहातः परमभिधानात् ॥ १० ॥

प्रलये हिरण्यगर्भेण सभूत्वा सकामज्ञानी परब्रह्माधिगच्छति ।

सगुणोपासक हिरण्यगर्भ के साथ होते ब्रह्म होता है ।

स्मृतेश्च ॥ ११ ॥

स्मृतिप्रमाणमत्र जीवस्य हिरण्यगर्भेणसह परब्रह्माधिगमे ।

इसमें स्मृति प्रामाण है सगुणोपासक ब्रह्मा के साथ होकर पर ब्रह्म को प्राप्त होता है।

परं जैमिनिर्मुख्यत्वात ॥ १२ ॥

परम्ब्रह्मैवेति मुख्यत्वादिति जैमिनिर्मनुते ।

मुख्य ब्रह्म को पाते हैं एजैमिनि कहते हैं।

दर्शनाच्च ॥ १३ ॥

श्रुतेर्दर्शनात परमेवाधिगच्छति ।

श्रुति दर्शन से भी परब्रह्म को जाते हैं उपासक।

न च कार्ये प्रतिपत्यभिसन्धिः ॥ १४ ॥

कार्ये ब्रह्माणि न प्रत्याभिसन्धिराचार्यस्य ब्रह्म प्रस्तुतेः ।

ब्रह्म प्रस्तावना से परब्रह्म ही को सगुणोपासक भी जाता है ऐसा मालूम होता है।

अप्रतीकालम्बनान्नयतीति वादरायण उभयथा दोषात्तत्क्रतुश्च १५

परब्रह्मोपासकानेव ब्रह्माधिगमयति विद्या नेतरानुभयथा चा दोषः तत्क्रतुश्चेति सिद्धम् ।

प्रतीकोपासना वाले ब्रह्म लोक परम्परा से जाते हैं।

विशेषं च दर्शयति ॥ १६ ॥

प्रतीकोपासनादौ तारतम्यं दृश्यते ।

प्रतीकोपासना में फल और नाम भिन्न है।

अथ ब्रह्मसूत्रे चतुर्थाध्याये तृतीयपादः समाप्तः ।

# अथ चतुर्थोऽध्यायः चतुर्थपादः प्रारम्भः

सम्पद्याविर्भावः स्वेनशब्दात् ॥ १ ॥

स्वेनैवात्मना सम्पद्याविर्भवति शब्दाच्छ्रुतेः ।

आत्म स्वरूप में परिणत होने को मोक्ष कहते हैं ।

मुक्तः प्रतिज्ञानात् ॥ २ ॥

मुक्त इदगिति प्रतिज्ञादर्शनात् ।

अशरीर ब्रह्म मुक्त होता है एसा पूर्व प्रतिज्ञा से सिद्ध होताहै मुक्त ब्रह्म लक्षण में परिणत है ।

आत्मा प्रकरणात् ॥ ३ ॥

प्रकरणात्स आत्मा मुक्तो भवति नान्यः ।

प्रकरण से जीव ग्रहण है मुक्त जीव होता है जड नहीं होता है ।

अविभागेन दृष्टत्वात् ॥ ४ ॥

परस्मादविभक्तएव मुक्तस्तिष्ठति ।

ब्रह्माभिन्न मुक्त जीव होता है ।

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

ब्रह्मस्वरूपावस्थानं जैमिनिर्मन्यते मुक्तानां अपहत पाप्मत्वादि लक्षणेन ।

जैमिनि भी मुक्त जीव ब्रह्म लक्षण ब्रह्मावस्थान कहा है निष्पाप मुक्त है ।

चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

चिन्मात्रात्मकत्वमिति औडुलोमिर्मन्यते ।

चिन्मात्र ब्रह्मण जीव मुक्त मानते हैं औडुलोमि आचार्य सच्चिदानन्द है ।

एवमप्युपन्यासात्पूर्वभावादविरोधं वादरायणः ॥ ७ ॥

चिन्मात्रेण साम्यात पूर्ववस्थचैतन्येनाविरोधः वादरायणो मनुते हेयादेयाभावान्मुक्तिरिति ।

वेदव्यासाचार्य तो विशेष चैतन्यावस्थाभङ्गमात्र से अविरोध से सब के मुक्त होता है ज्ञाना विर्भाव से ।

संकल्पादेवतु तच्छ्रुते ॥ ८ ॥

देवलोकादिगमनम्मुक्तानां संकल्पादेव श्रूयते ।

विमुक्तों का लोकान्तर गमन इच्छा मात्र से होता है ।

अतएव चानन्याधिपतिः ॥ ९ ॥

अतएव स्वराज्याधिपति विंद्वानस्ति

इसलिये मुक्त स्वतन्त्र इच्छा गमन से है ।

अभावं वादरिराह ह्येवम् ॥ १० ॥

मुक्तानां शरीरेन्द्रियाणामभावं मन्यते वादरिः ।

मुक्त के शरीर और इन्द्रिय नहीं होते हैं ।

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

पुनश्शरीरेन्द्रियाणाम्भावं मनुते जैमिनिः ।

मुक्त के शरीरादि होते है यह जैमिनि मानते हैं ।

द्वादशाहवदुभयविधं वादरायणोऽतः ॥ १२ ॥

अतः द्वादशाहसत्रवत् वादरायण उभयविधम्मन्यते ।

द्वादशाह यज्ञ के तुल्य वेद व्यास दोनों मानते हैं ।

तन्वभावे सन्ध्यवदुपपद्यते ॥ १३ ॥

शरीराभावेपि मुक्तस्य सांध्ये स्वप्ने यथाभिमतम्भवति तथास्तु इति मन्यते ।

स्वप्न बिहार के तुल्य मुक्त शरीर न रहने पर भी इच्छा सिद्धि होती है ।

भावे जाग्रद्वत् ॥ १४ ॥

शरीरसत्वे जाग्रतीव वांछासिद्धिः ।

शरीर पक्ष मे जाग्रदवस्थासा कार्य होता है ॥

प्रदीपवदावेशस्तथाहि दर्शयति ॥ १५ ॥

यथा प्रदीपः प्रदीपान्तरं वारयति तथा मुक्तः कायव्यूहं रचयतीति ।

जैसे दीपक दीपक को जलाता है वैसे मुक्त अपनी सिद्धि से कायव्यूह रचता है ।

स्वाध्ययसम्पत्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

सुषुप्तिं कैवल्यम्वा समपेक्ष्य सर्वमाविष्कृतम् ।

सुषुप्ति में मोक्ष को लेकर के बोलते हैं ।

जगद् व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥

जगद् व्यापारमन्तरा सर्वाधिकारो मुक्तानां भवति ।

जगत् बनाने का अधिकार छोड़कर सर्वाधिकार मुक्त जीव को होता है ।

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥१८॥

अधिकारित्वप्रत्यक्षमुपदिश्यते इति चेन्न मण्डलस्थेश्वर स्योक्तेरधिकारित्वमिति ।

ईश्वर कोही अधिकार कहा है वही सबको अधिकारी बनाते हैं ।

विकारावर्ति च तथाहि स्थितिमाह॥ १९ ॥

पारमेश्वररूपविकारवर्ति च तथा स्थितिमाह पादोस्ये त्यादि ।

पादोस्य विश्वाभूतानि कहने से दो रूप ईश्वर का है ।

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

प्रत्यक्षानुमाने दर्शयतश्चैवम् न तत्र सूर्यो भातीति ।

वहां पर सूर्य का प्रकाश नहीं है वह नित्य है और अनित्य है ।

भोगमात्रसाम्यालिङ्गाच्च ॥ २१ ॥

इश्वरैश्वर्यभोगमात्रसाम्येन न निरङ्कुशानन्दा भवन्ती तरेषामिति ।

कामना वाले को निरङ्कुश सुख नहीं है।

अनावृत्तिः शब्दादनावृत्तिः शब्दात ॥ २२ ॥

मुक्तानामकामान मनावृत्तिःशब्दाच्छ्रुतेः ।

अकाम मुक्तों की आवृत्ति नहीं होती है।

इति ब्रह्मसूत्रे चतुर्थाध्याये चतुर्थ पादः समाप्तः ।

---

इति श्रीमत्सर्वतंत्र स्वतंत्र विद्यावाचस्पति देवराज पं० देवदत्त शर्म विरचिते वेदान्त सिद्धान्त मत मार्तण्डे प्रथमपादः समाप्तः ।



# अथ वेदान्त सिद्धान्त मत मार्तण्डे

## द्वितीय पादे विषयानुक्रमणिका ।



❀ इति ❀

# अथ वेदान्त सिद्धान्त मतमार्तण्डे

सर्वतंत्रस्वतंत्रविद्यावाचस्पति देवराज पं० देवदत्तशर्म विरचिते

# तर्कसंचयः द्वितीयः पादः

## प्रारभ्यते ।

इहास्ति खलुविज्ञानविज्ञेयात्मकतया प्रथमाने जगति विज्ञानं सत् तादितरत्त्वसत् । अनिर्वचनीयं हि नभोनभस्वदादि रूपमेतद्विज्ञेयम् न तावत्सदस्तीति शक्यते वक्तुं तथाहि "लक्षणप्रमाणाभ्यां वस्तुसिद्धिः" इति हि प्रमेयसत्तावादिनां वादाहव दुन्दुभिध्वानः । न च लक्षणानि दूषणचक्रनक्रमुखेभ्यः शक्नुवंति निस्तरीतुम् । लक्षणानां चैवंगतौ लक्षणाधीना लक्ष्यव्यवस्थितिरिति सुदूरान[illegible] तपास्विनी लक्ष्यव्यवस्थितेरात्मलाभप्रत्याशा । प्रमाणेषु च विपुलवादिनां विविधविप्रतिपत्तिसद्भावादवतरति लक्षणापेक्षेति । परीक्षायां स्वयमपि तेषां लक्षतया न नाम लब्धपदत्वम् । प्रमाणाधीनश्च प्रमेयांगीकार इति कुतस्तरां प्रमे-

याणां सिद्धिः । नन्वेतेषां पदार्थानां लोकसिद्धत्वादेवांगीक्रियतां सत्त्वं किमनया विडंवनयेतिचेल्लोकसिद्धत्वादेवांगीकारे युष्माकमपि परस्परं विप्रातिपत्तेरनवकाशः । किं च 'लोकसिद्ध-त्वादिति' तावन्निरूपणमर्हति । कि न्नामलोकसिद्धत्वं सत्वेन प्रतियिमानत्वमाहोस्वित्सत्त्वेन प्रमाणसिद्धत्वं तत्राद्ये मरुमरीचिकोद कादीनां सत्वस्य को वा वारयिता स्यात् । ननु सर्वैस्तथा प्रतीयमानत्वमुच्यते। न च मरुमरीचिकोदकादीनां सर्वःप्रत्येति तथा त्वमपि तु कश्चिदेवेति चेन्नहिभो घटादिकमपि सर्वः प्रत्येति । अथोच्येतास्ति तत्र सर्वेषां तथा प्रत्ययस्य स्वरूपयोग्यता—नतु मरीचिकादाविति चेन्निरुच्यतां सायोग्यता कथंकारं चाधिगता तवेत्यादिपर्यनुयोगपरंपरान्न खलु विश्रमयितुं पारयिष्यासि किंचैवं सति शरीरात्मतादात्म्यागींकारिभिर्लोकायतिकैरेवोर्जितं जितं हंहो आस्तिक्यं साधु संराक्षितं धीधनैः अयि भोःपश्चात् वाध्य-तया तत्तथानांगीक्रियते—इति चेत्तर्हि एतेषां न खलु पश्चात्तन-वाधबाध्यतेत्यत्रार्थे कस्ते देशिकः । अथास्तु द्वितीय इति चेत्सत्वेन प्रमाणासिद्धत्वं तद्धिपरीक्षामधिकरोति । न हि परीक्षा मन्तरासत्वेन वासत्वेन वा प्रमाणतः सिद्धा इति संभवति परि-च्छितिः न चैते प्रमेयाः सन्ति विज्ञानमिव स्वप्रकाशाः येन न स्यात्साधकापेक्षा ॥

## ॥ अथ विज्ञानस्वप्रकाशतावादः ॥

विज्ञानं हि स्वप्रकाशं स्वतःसिद्धस्वरूपम् । तद्धि नो परतः सेद्धुमर्हति । तथा हि यत्र यत्र हि जिज्ञासितस्य । संशयविपर्ययोर्व्यतिरेकप्रमायाश्च यावदभावकूटं वर्तते तत्र तत्र जिज्ञासितस्य प्रमितत्वमित्ययं नियमस्तावद्विश्वसत्तावादिनैव निर्धारितः । जाग्रति च विज्ञाने न तावत्कस्यचिदपि कदाचिदपि जानामि नवेत्याकारकः संशयो नवा विपर्ययो न जानामीत्याकारकः । न जानामीत्याकारा विज्ञानव्यतिरेकावगाहिनी प्रमा तु वराकी दूरापास्ता । तत्सद्भावे तदभावावग्राहिग्रहस्यभ्रमत्वनियतेः । विज्ञानमस्वप्रकाशं चेदभविष्यत्तर्हि विज्ञाने सत्यपि जिज्ञासायां सत्यां ज्ञानाभावविषयकं ज्ञानं संशयो वा विपर्ययो वा व्यतिरेक प्रमैव वा निरर्गलमभविष्यत् । यत्र यत्र हि प्रमितत्वाभावस्तत्र तत्र सत्यां जिज्ञासायां प्रमितत्वाभावावगाहिज्ञानं जायत इति प्रतिनियमात । तदित्थं विज्ञानस्य परानपेक्षप्रमितत्वमेव स्वतः सिद्धत्वस्वप्रकाशत्वादिपदव्यपदेशभाक् ॥

व्यवसायानन्तरमनुव्यवसायो भवतीति न व्यवसाये संशयादिरितिचेद्यत्रैवगत्वा ज्ञानस्य ज्ञानंनाभ्युपगंस्यते तत्र तज्ज्ञानव्यक्तेः संशयादिर्दुर्वार इति प्राथमिकविज्ञानविषयपर्यन्तविषयादिः प्रसरिष्यतीति व्यवहारोच्छेद एव

पर्यवस्यति ॥ विषयिसंशयादेर्विषयसंशयादिजनकताध्रौव्यात् अथ व्यवसायानुव्यवसायतदनुव्यवसायपुनस्तदनुव्यवसायपारं-पर्य्येविश्रान्तैव मंस्यत इति चेत्तर्हि यत्किंचिदेकमात्रविषय-विषयकविज्ञानानुविज्ञानधारायाअविच्छिन्न प्रवाहतया जन्मश-तेनापि विषयांतरसंचारो दुर्लभ आपद्येतापद्येरंश्च । मूर्च्छासु-षुप्तिमरणमोक्षाः शशविषाणायिताः । मूर्च्छादौ हि तत्तद्विषया-वगाहि यावज्ज्ञानाभावः सर्ववादिसंप्रतिपन्नः । न चै तज्ज्ञानधा-रायाः संततत्व संघटते । ननु ज्ञानप्रामाण्यसंशयाधीनः संशय-स्तवापि वैज्ञानिकस्य विषयपर्यंतो निरर्गल एवेतिचेन्नैतत् । ज्ञानस्वप्रकाशतानये हि मानमेयभावव्यवस्थाया अभावादेव तदाश्रया दोषाः संति निरवकाशाः । यदि तु भेदेन विषय विषयिभावो भवेत्तर्हि ज्ञानस्वरूपमेव न सिद्ध्येत् । विज्ञानस्य परमुखनिरीक्षकत्वे ह्यापतति पूर्वोपदर्शितविधया मूलक्षयकरी खल्वनवस्था दुरवस्था । अथोच्येत अवश्यज्ञेयतां ज्ञानस्य नाभ्युपेमः स्वार्थसंव्यवहारस्तु ज्ञानस्य स्वरूपसत्तयैवनिर्वक्ष्य-तीति ब्रूमह इति न तदपि विचारचारु यतः स्वरूपसत्तायां प्रमाणाप्रवृत्तौ स्वरूपसत्तेत्येव कुतः समायातम् । येन व्यवहारः समासादयेदात्मानम् । कुतोऽध्यवसितमिदं सती

सा वित्तिरिति । असत्येव कुतो न स्यात् । तादिदमुच्यत—अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्धयतीति ॥

इति विज्ञानस्वप्रकाशतावादः ॥

घटपटादेः सत्तां व्यवहरन् हि प्रामाणिकस्तत्रप्रमाणसद्भावं वक्तुमर्हति । न हि प्रमाणमनुपन्यस्य परीक्षकेण तत्सत्ता शक्यते ऽङ्गी कर्तुम् । प्रमाणमनुपपारयतो वाङ्मात्रेण चेद्वस्तु सद्भावः सिद्धयेत्तर्हि नास्तिता वाङ्मयमात्रेण सद्भावः किमिति न स्यात् तदावश्यं तेन घटसत्तायां व्यवस्थाप्यायां व्यवस्थापकप्रमाणसत्तोप न्यास्था । सापि च प्रमेयसत्तान्यायेन स्वावगाहि प्रमाणसत्ता मपेक्षते । यदि हि प्रमाणसत्तान्तरमन्तरणैव तत्प्रमाणसत्तां परोऽङ्गीकुर्याद्धन्त तर्हि प्रथमत एव विनैव प्रमाणसत्तया घट सत्तामेव किमिति नांगीकरोति । अन्ते रंडाविवाहश्चेदादावेव कुतो न हीतिन्यायात् तत्रास्तिचेत्प्रमाणसत्तांतरं तर्हि तत्राप्येवं तत उत्तरत्राप्येवमेवेत्यनवस्था डाकिनी न मुंचाति पृष्ठम् । अथ नास्ति तत्र यत्किंचित्प्रमाणसद्भावस्तर्हिप्राथमिकीप्रमाण सत्तैव नात्मानमवसादयति कुतस्तरां तु वराकी प्रमेयसत्ता ॥

अन्यथा कस्कः शशविषाणादिर्न सिद्धयेत् । तादित्थं तत्र यस्यकस्यचिदपि प्रमाणस्याप्रवृत्तौ प्रथमप्रमाणसत्ताया असद्भावः

समायाति यावत्प्रमाणसत्ताविनिवृत्तिर्हि स्वप्रमेयविनिवृत्तिप्रतिनियता खलु भवति । प्रमाणस्यासद्भावे तदुच्छिष्टपुष्टस्य तस्य तस्य खलु विषयसत्त्वस्य सुदूरपराहतो नामात्मलाभः । अथोच्येत न तावदव्यवहितपूर्वापरवित्तितद्वित्तिपारम्परीमभ्युपगच्छामः येन व्यवहारानिष्पत्त्यापत्तिरियं स्यात् किं तु यदा कदाचित्कयाचिद्वित्तिव्यक्त्या कादाचित्की काचिद्वित्तिव्यक्तिः प्रमीयते इति चेत । इत्थं च सर्वापि वित्तिःप्रमाणसिद्धैव भवति इति चेत स्यात् स्वल्विदं तदा यदि नाम अयं घटः घटमहं जानामि इत्यतोऽधिका काचित् कदाचिद्वित्तिरस्मदादेरुत्पद्यमानानुभूयेत यास्याद्घटवित्ति तद्वित्ति तद्वित्तिवित्तिप्रवाहंगोचरयंती तादृग्विषयशतभारोद्वहनमंथरा अथ मन्येतास्मदादेरेतज्जन्मावच्छेदेनैवं विधा वित्तिरभवंत्यपि योगिप्रभृतिविलक्षणजन्मावच्छेदेन स्यादिति संभवतीति तर्हि यस्या वित्तेस्तावद्विषयगर्भिता धीरविषया साप्यन्यया कयाचिद्वित्तिव्यक्त्या क्रोडीकरणीयेत्यमुष्मिन्नर्थे प्रमाणाभावो नाम न नाम च तथा सति संभवति मोक्षः उपदर्शित मुद्रया हि विरि तद्वित्तिधाराप्रवाहप्रवृत्तौ कथंकारं यावद्विशेषगुणोच्छेदलक्षणोमोक्षः स्याल्लब्धपदः नापि च स्वात्मना सह तं तादृग्वित्तिप्रवाहं काचिद्वित्तिव्यक्तिरवगाढुमीष्टे तथाभावे तत्रैव स्वप्रकाशतापदं निदधाति निदधात्वितिचेदंत

भोः एतावद्भिभवतः प्रयासजातं जातमरण्यरुदितं नाम प्रथमत एवास्माभिरुपदिष्टं तत्कुतो नाङ्गीकृतमेतेन अन्योन्यावित्तिगोचरा-न्योन्यवित्तिरित्यपि निरस्तम् चरमा हि वित्तिव्यक्तिःस्वावगाहिनी मुपान्त्यां वित्तिव्यक्तिं गोचरयंती स्वात्मानं विषयीकुर्यादेव। एव मेवोपान्त्यावित्तिव्यक्तिरन्तिमां स्वावगाहिनीं विषयीकुर्वती स्वात्मानमपिगोचरयेदेवेति सविषयकान्योन्यग्रहे स्वप्रकाशताप-त्तिः। ननु चरमा वित्तिव्यक्तिः पुरुषान्तरेण प्रमास्यतेइत्यस्त्येव सा प्रमितेति न तावत्तदभावः सेद्धुमर्हतीति चेत्तत्रापि प्रमाणाविशे-षस्य त्वयादातुमशक्यतया कुतस्तदस्तिता सिद्धिः तद्धाने वाभूयो भूयः प्रमाणपरंपरा प्रधावनमित्यावेदितैवानवस्था ॥

ननु ज्ञानसिद्धयन्यथानुपपत्तिरेव पर्य्यवस्यन्तीज्ञानपरम्परा-माक्षिपेत्—अन्यथा तु घटकादाचित्कत्वान्यथानुपपत्तिर्घटसाम-ग्रीपरंपरामपि नाक्षिपेत्—इति चेन्न यदि हि घटसामग्रीविच्छेदः स्यात्तर्हि घटस्य कादाचित्कत्वं न स्यात् ततश्च स्यादेव वा घटो नस्यादेव वा—इत्यनयोरन्यतरत्प्रसजेत् अकारणानां हि पदार्थानामुभय्येव विधावैकान्तिकं सत्वमसत्वं वा यथा—आत्मनः कदाचिदपि नासत्वं शशशृंगस्य तु कदाचिदपि न सत्वं तच्चेदु-भयं घटस्य न प्रत्यक्षक्षपितमिति घटस्य कादाचित्कत्वान्यथा नुपपत्त्या घटसामग्रीतत्सामग्रीतत्सामग्रीसामग्रीधारा निरा-

बाधा समापतति—इत्येवं ...टसामग्रीपदरपराङ्गीकारेनवस्थामात्रं तच्च तत्कादाचित्कत्वान्यथानुपपत्तिरूपप्रमाणपरिकल्पितत्वान्न खलु दोष इतीयं घटकोटिः ॥ ज्ञानकोटौ तु ज्ञानसिद्धि स्वस्मादपि भवन्ती न प्रभवति ज्ञानपरंपरामाक्षेप्तुमित्यन्यथोपपत्तिरेव तत्कुतोन्यथानुपपत्तिः, ज्ञानस्थले तु यदि ज्ञानसिद्ध्यन्यथानुपपत्तिर्ज्ञानस्य ज्ञानान्तरावेद्यत्वाक्षेपिका भवेत्तर्हि एवं ज्ञानपरंपराङ्गीकारे सुदूरं ज्ञानधारा धावयित्वा अन्तिमज्ञानस्वरूपस्यापि तद्विषयकुक्षौ निक्षेपश्चेदुच्येत तर्हि शरणीकृतैव ...प्रकाशता—इत्येतावद्धावनस्याप्रेक्षावच्चेष्टितत्वमेवतत्वं पर्य्यवस्यति—तत्कुक्ष्यनिक्षेपे वा अनवस्थापिशाची न मुंचति पृष्ठं—अथ तत्कुक्षावनिक्षिप्यैव स्वरूपंचेद्विश्रम्यते तर्ह्यंतिमस्य तस्यालब्धपदत्वे तदायत्तानां पूर्वपूर्वेषां ज्ञानानामसिद्ध्यापत्त्या सिकताकूपविशरणन्यायो दत्तपदो भवतीत्येवं ज्ञानपरंपरा नामदुरुत्तरव्यसनपरंपरैव हंत क्रीताज्ञानपरप्रकाशतावादिभिः ॥

न चैतैर्दोषैर्नास्त्येव ज्ञानमिति साधु स्वत एव सर्वसिद्धस्य तस्य ...रपह्नवत्वात् ॥

तदेवं सति भेदोऽयं बौद्धानां ब्रह्मवादिनां
यदाहुरेके निर्वाच्यं कृत्स्नं ब्रह्मेतरत्परे ॥ १ ॥

तदुक्तं बुद्धेन लंकावतारे ( ग्रंथविशेषे )

बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ॥
अतो निरभिलप्यास्ते निःस्वभावाश्च देशिताः ॥ २ ॥

( अथानिर्वचनीयतावादः । )

विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणमितियथास्ति दिशं दर्शयामस्तथा। तथाहि नेदं सद्भवितुमर्हति वक्ष्यमाणदूषणगणग्रस्तत्वात । नाप्यसदेव तथासति लौकिकविचारकाणां सर्वव्यवहारव्याहत्यापत्तेः ॥ अथेयमनिर्वचनीयता वस्तुतोऽस्ति नास्तिवेति चेत्तदिदमगृहीतवाद्यभिसंधेः प्रतिवादिनः प्रत्यवस्थानं यो हि नाम वस्तुमात्रं सत्वासत्वाभ्यामनिर्वचनीयमातिष्ठते सतावत्प्रपंचानिर्वचनीयतां तु पुनः सतीं ब्रूयादित्यहो दुराशापाशो मुग्धमनसाम् । इयमपि खलु जगदन्तः पातिन्येवेति सर्वमनिर्वचनीयमिति वदता जगन्मात्राभिधायि सर्वपदेनानिर्वचनीयताप्यभिहितैव । नचानिर्वचनीयता स्थापनेन भवतो द्वैतमापतित मितिवाच्यम्, यतो नो खलु वयंतां व्यवस्थापयामोऽपि तु प्रतिवादिमतानुसारेणैवेदं व्यवतिष्ठते तेन जगन्निर्वक्तुं नो पार्यत इति तस्यानिर्वचनीयत्वं पर्यवस्यतीति ॥ विधिनिषेधयोरेकतरनिरासस्तदन्यपर्यवसायीति हि तैरभ्युपगम्यते नन्वनिर्वचनीयत्वं

पर्यवस्यतीत्यभ्युपगच्छतोऽपि भवतोभवत्येव द्वैतापत्तिरिति चेन्न-
तथा वयमभ्युपगच्छामोऽपि तु युष्मन्मतानुसारेणैवेदमायातीति
केवलं युष्मान्प्रबोधयामः, वस्तुगत्या तु वयं सर्वप्रपंचसत्वाऽस-
त्वव्यवस्थापनविनिवृत्ताः स्वतः सिद्धस्वरूपे विज्ञानात्मके ब्रह्म
तत्वे केवले निर्भरजपः कृतकृत्याः सुखमास्महे । ये तु
स्वपरिकल्पितां साधनवाधनव्यवस्थां पुरस्कृत्य विचारमव
तारयन्ति तत्वं विनिश्चिकीषन्तः, तान्प्रति ब्रूमो वयं न खलु
साध्वीयं भवतां विचारव्यवस्था भवत्कल्पितव्यवस्थयैव व्याहत
त्वात् । अत एवास्मदुपन्यस्यमानदूषण स्थितिविषयाः पर्यनु
योगा निरवकाशाः । युष्मद्व्यवस्थयैव युष्मद्व्यवस्थायाः
व्याहत्युपन्यासात् । न च विचारे एव व्याघातोपन्यासो भवता
कर्तव्यः, स च तयोः सत्वमङ्गीकृत्यैवेति तयोः सत्वमभ्युपगत
मिति द्वैतापत्तिरिति वाच्यम्, तदीयसत्वाऽसत्वोपगमोदासीनै
रेवास्माभिर्विचार्यमित्येतावन्मात्रमुद्दिश्य विचारप्रवर्तनायाः
सुकरत्वात् यदि तु विचारस्य सत्वमनभ्युपेत्य नैवाविचारयितुं
शक्यमित्युच्यते हंत तर्हि प्रमाणमव्यापार्य न तदीयसत्वाद्युप
गमोऽपि कर्तुं शक्यः, अन्यथा सप्तमरसादेरपि सत्वाद्युपगमः
प्रसजेत् । ततश्च प्रथमत एव विचारस्यापि विचार्यताङ्गीकारे
विचारविषयकविचारसाधनानामपि पुनरुक्तमुद्रया विचार्यत्वापत्ते

रित्यनवस्थादौस्थ्येन चिकीर्षितविचार एव न ताव[illegible]त्मान मासादयेत् । न च पूर्वपूर्वसिद्धत्वाद्विचारस्य तत्र विचारा न्तरं नावश्यकमिति वाच्यम्, यतः, यदि विचारः पूर्वसिद्धः, तर्हि विचारस्य विचार्याविनाभूतत्वात्विचार्यमपि पूर्वसिद्ध मिति विचारस्य पुनरनारंभ एव सांप्रतम् अथ विचार्यविशेषस्य पूर्वमसिद्धत्वादस्त्यावश्यकः सांप्रतं विचारारंभ इति चेत्तर्हि तद्विषयकविचार[illegible]पे पूर्वमसिद्धिरेवेति सिद्धं तस्य विचार्यत्वमित्यनवस्थादौस्थ्येन विचारारंभ एवाशक्यः स्यादिति विरामएव रमणीयो लौहचणकचर्वणस्य ॥

## ( अथ लक्षणल[illegible]नम् )

तत्र "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" इत्या चक्षते तावल्लाक्षणिकाः । व्यावृत्तिर्नामेतरभेदानुमितिः, व्यवहारस्तु श[illegible] प्रयोगो हानादानादिरूपो वा । तत्र लक्षणाधीना, पृथिवी तदितरेभ्यो भिद्यते गन्धवत्वादित्यादिर्व्यावृत्तेः प्रक्रिया, यद्यद्गंधवत्वं तत्तत्पृथिवीत्वेन व्यवहर्त्तव्यं हातव्यमादातव्यञ्चेति व्यवहारस्य । न चैतत्संभवति । तथा हि लक्षणेन गंधवत्वादिना [illegible]मेव पृथिव्यां व्या[illegible] व्यावृत्तिर्वा व्यवहाररूपं वा साध्यं साधनीयं स्यात । लक्षणज्ञानं च ल[illegible]तरसाधारण्येन

भवदप्यकिंचित्करमित्यवश्यं लक्ष्यांतरव्यावृत्ततयैव लक्षणस्य ज्ञानमंगीकार्यम् । तदेवं स्थिते, लक्षणस्य गंधवत्वादेर्व्यावृत्तिः पृथिव्यादिलक्ष्याधीनैव चेत्तर्हि अन्योन्याश्रयः गंधवत्वेनैवहि पृथिवी जलादिभ्यो व्यावर्तनीया । गंधवत्वं च जलादिसाधारणतया गृहीतं जलादिभ्यः पृथिवीं व्यावर्तयितुं न खलु प्रभवतीति जलादिव्यावृत्ततयागृहीतं गंधवत्वं पृथिव्या जलादिभ्यो व्यावर्तकं वाच्यम् सेयं च गंधवत्वस्य जलादिभ्यो व्यावृत्तिः पृथिवी स्वरूपेण क्रियत इति पृथिवीरूपलक्ष्यव्यावृत्तिर्गंधवत्वरूप लक्षणव्यावृत्त्यधीना, अथ गंधवत्वरूपलक्षणव्यावृत्तिः पृथिवीरूप लक्ष्यव्यावृत्त्यधीनेत्यनयोरेकतरस्य व्यावृत्तिरन्यतरव्यावृत्ति मपेक्षते परस्परमित्यन्योन्यव्यावृत्तिमुखनिरीक्षकत्वादन्योन्यव्या वृत्तेर्भवत्यन्योन्याश्रयः । अथ लक्षणांतरमस्य लक्षणस्य व्यावर्तकं तच्च लक्षणं लक्ष्येण व्यावर्तितमितिचेच्चक्रकम् अथ लक्षणे लक्षणांतरं तत्रापि लक्षणांतरमेव व्यावर्तकमितिचेदेवमुपरिष्टा दुपरिष्टादारोहणेऽपरावृत्तावनवस्था एवं जलादिसाधारण्येन ज्ञातायां पृथिव्यामितरभेदसाधनमकिंचित्करम् इति व्यावृत्तायां तस्यां तत्साधनं वाच्यम् । तद्व्यावृत्तिर्यदि प्र[illegible]तलक्षणाधीना, तदान्योन्याश्रयः । ल[illegible]ांतरेण चेत् प्रकृतलक्षणानुपयोगः । तदपि लक्षणं व्या[illegible]तायामेव पृथिव्यां सापि व्यावृत्तिर्लक्षणांतरेणेत्ये- वमनवस्था ॥

## ( अथ प्रमाणखण्डनवादः । )

एवमत्रेदंप्रमाणमित्युपन्यस्ते वादिना, प्रष्टव्यं किमिदं प्रमाणं नाम प्रमाकरणं प्रमाणमित्यत्र केयं प्रमा नाम । तत्वानुभूतिः प्रमेति चेत्तस्य भावस्तत्वं । प्रकृतश्च तच्छब्दार्थः न चात्र प्रकृतं किंचित् यत्तच्छब्देन परामर्शनीयं स्यात् । अथानुभूतिः स्वसंबंधिविषयमाक्षेपेण बुद्धिस्थीकरोति, स एव तच्छब्देन परामृश्यते तदादिसर्वनाम्नां प्रकृतपरामर्शकत्वाद्वक्तृश्रोत्रृ[illegible]द्धिस्थताया च प्रकरणपदार्थस्य विश्रामात् एवं यस्यार्थस्य यो भावः स तस्य तत्वमुच्यते इति चेन्न अरजतादेरपि रजताद्यात्मनाऽनुभवविषयतासद्भावादसत्यानुभूत्यव्यवच्छेदात् । उक्तविधया तत्वशब्दस्य धर्मवाचकत्वात् धर्म्यवाचकतया धर्मिप्रमाया विशिष्टवस्तुविषयकप्रमायाश्चाप्रमात्वापाताच्च । अथोच्यते चेत, अवयवार्थपुरस्कारेण यदिदं दूषणाभिधानंतदकिंचित्करं यतोऽयं तत्वशब्दो वस्तु स्वरूपमात्रवाचक इति, तदप्यापातरमणीयम् यतःस्व[illegible]रूपत्वस्य जातिरूपस्योपाधिरूपस्य वा यदि स्वस्मिन्वर्तमानत्वमंगीक्रियते तर्ह्यात्माश्रयः । नोचेत्तर्हि स्वरूपत्वप्रमाया स्तत्वानुभूतित्वविरहात् न स्यात् प्रमात्वम् । न च स्वरूपश[illegible]र्थः, कश्चिदनुगत इति तत्र तत्र तस्य तस्य स्वरूपश[illegible]ने घर्त[illegible] लक्ष[illegible]स्यास्याव्यापकत्वं किंचात्र [illegible] विपर्यय[illegible]निरासो

भवतामभिप्रेतः, स च कथं स्यात् । तथा हि शुक्तौ योऽयं रजतत्व-प्रत्ययः सोऽपि स्वरूपबुद्धिर्भवत्येव न हि शुक्तिर्वा रजतत्वं वा न स्वरूपम् न च तयोः प्रतिभासमानो यः संबन्धः स न स्वरूपमिति वाच्यम्, यतः समवायो हि तयोर्भासमानः संबंधः स च स्वरूपमेव । सत्यं, समवायस्वरूपम् शुक्तिव्यक्तौ तु स रजतत्वस्य नास्तीति चेन्माभूत्तत्र न हि तावता स्वरूपता व्यपैति । न हि गेहे चैत्रोनास्तीत्येतावता स्वरूपं न स्यात । स्वरूपमात्रं च लक्षणघटक[illegible]मस्ति भवतां अथ न [illegible]रूपमात्रं तत्वमुच्यते किं तु यद्देशकालसंबंधि यस्ययत्स्वरूपं प्रतीतं, तस्य तद्देशकालसंबंधि तत्स्वरूपं तत्वमुच्यते इति चेन्मैवम्, देशकालविषयकप्रमाया अप्रमात्वापातात । न हि [illegible]कालयो र्देशकालसंबंधोस्ति तयोः [illegible]वलस्वरूपमे[illegible] तत्व[illegible]र्थ इति चेत एवं सति तत्वश[illegible] स्यानेकार्थत्वेन [illegible]लक्षणस्या व्यापकतापत्तिः । अथोच्यते चेत् ज्ञानोल्लि[illegible]तप्रकारवत्वं खलु विषय[illegible] तत्वम् एवं च [illegible]शस्वरूपकालस्वरू[illegible]शकालसंबंध-स्वरूपाणाम[illegible]ममोस्त्विति तदपि फल्गु भाविरक्तिम्नो घटस्य प्रागप्यत्ररक्तपित्तादि[illegible]द्रक्तिम[illegible]स्कारेण ज्ञानं जातं तज्ज्ञानमप्येवं सति प्रमा स्यात् [illegible]नकाल [illegible]नोल्लिसितप्रकार-वत्वमित्येवं यदातनत्वत [illegible]तनत्वविशेष[illegible]पे कालावमा[illegible]

प्रमाया अप्रमात्वापातः । न हि खलु काले कालवैशिष्ट्यम् । अथ दिवसस्य प्रहरः चतुष्प्रहरोदिवसो, यामवती यामिनी- त्यादिसर्वजनीनप्रतीत्या कालेऽप्यस्तु कालसंबंधः इति चेत्तर्हि दण्ड्यपि देवदत्तः दंडालिनं समध्यारोहतु । उपाधिभेदेपि उपाधे यस्यैकत्वानिवृत्तेर्नोक्तापत्तिरिति चेद्दंत निपुणोसि स्वयमेव दत्तोत्तरः न हि कालोपाध्यंतरस्यापरकालोपाधिवृत्तावपि कालस्य कालवृत्तित्वं सिद्धं भवति ॥

किंचेदमनुभूतित्वं नाम ज्ञानत्वावांतरजातिविशेष एवानुभूति- त्वमिति चेत् कस्मादनुभूतित्वं जातिरभ्युपेयते । अनुभवत्यनु- भवतीत्याकारानुगतप्रतीत्यन्यथानुपपत्तिमाहात्म्यात् न हि विषया- नुगममन्तराप्रतीतिरनुगमः संभवी । कथमन्यथा नीलपीतादि- घटव्यक्त्यवगाहिप्रतीतेरिव पटावगाहिप्रतीतेरपि घटोऽयमित्या- कारतानेतिचेन्नतच्चारु माघमासीयनिशावसाने सितासितसरि- त्संभेदस्नायिनः सत्यपि शब्दबलाद्भाविस्वर्गीयस्वर्गसुखसंप्रत्यये सुखमनुभवामीति प्रत्ययानुदयात्, प्रत्युत शीतसंभेदसंभूतवेदना- संवेदनादेव । यदि तु शब्दोपदर्शितव्याप्तिजानुमितेरनुभव एव स्यात्तर्हि सुखमनुभवामीति प्रत्ययः स्यात्तस्य । अथ मन्यसे साक्षात् काररूपम् खल्वनुभवशब्दार्थम्मत्वानुभवामीति तस्य प्रत्ययव्यवहारौ न भवतः शब्दजानुमानिकौ तु तौ परीक्ष्य भवेतामेव । स-

त्यप्यनुभवत्वे व्यवहारार्थं साक्षात्वमवश्यापेक्षणीयं चेत्किमनुभवत्वेन, परीक्षकस्य तु साक्षात्वमंतरणाप्य- माना ी तद्व्यवहाराभ्युपगमेनानुगम एव । अथ स्मृतिव्यावृत्तेन रूपेण यः प्रत्यक्षादिष्वनुभव इत्यनुगतावगमः स साक्षात्कारित्वादनुपपन्नः । ततश्च साक्षात्कार्यसाक्षात्कारिविशेषेषु साधारणमनुभूतित्वमन्यदेवेष्टव्यमितिचेत्तदपि न पदार्थांतरव्यावृत्तेन रूपेण यस्तदितरेष्वनुगतः प्रत्ययस्तत्र तदेवरूपं निमित्तम् न तु जातिः काचित्तदनुरोधात्कल्पनीया तथा सत्यनक्षपदार्थेभ्यो घटादिभ्यो व्यावृत्तेन रूपण विभीतकादिषु साम्य.वगमादक्षत्वजातिकल्पनापि प्रसजेत् ॥

तदेवं प्रमितेरनिरुक्त्या प्रमाकरणं प्रमाणमित्यप्यनिरुक्तं । अनया खलु प्रमाणत्वनिरुक्तिखंडनदिशा अपरेषामपि पदार्थानां निरुक्तेः खंडनं संप्रत्येतव्यम् ।

समस्तलोकशास्त्रैकमत्यमाश्रित्य नृत्यतोः ॥ का तदस्तु गतिस्तत्तद्वस्तुधीव्यवहारयोः ॥ १ ॥

उपपादयितुं तैस्तैर्यतैरशाकनीययाः । अनिर्वक्तव्यतावादः पादसेवागतिस्तयोः ॥ २ ॥

इति सर्वं च...रमूलम् ॥

यदि च त्व...शंनरीत्याभिधोयमानमस्माभिर्बाधं बाधसे तदा

स्वाभ्युपगतरीतिबाधविधायितैवते स्यात् । अस्माभिर्निर्वाह्य-
माणस्य त्वया खंडनयुक्त्यैव बाधेऽस्माकमेवजैत्रता खंडन युक्त्या
बाधिका निर्वाह्यपक्षश्च वाध्यः इत्यस्मदुक्तपक्षस्य त्वयैवनिर्वाहात्
तस्मात्त्वयानिर्वाहयमप्यस्माभिस्तुखंडनीयमितीहश्यामेव परं
कथायां त्वन्निर्वाह्यनिर्वाहे तव जयो नान्यथेतीदं प्रतिवादिनं
प्रति तत्कर्तव्यताप्रबोधनं खंडनकृताः ॥

अयं चास्य ग्रंथकर्तुरुपदेशः। एवं प्रकारासु खलु खंडन
युक्तिषु कामपि स्थानांतरस्थां केनापि प्रकारेणानीय तत्सदृशी
मन्यां वा स्वयमूहित्वा परैर्विविच्यमानान्यपि पदार्थान्तराणि
बुद्धिमता बाधनीयानि । अत्र चास्माभिर्दूषयितुं शंकितेभ्यः पर
पक्षप्रकारेभ्यो यदि प्रकारातरं कोपि स्वयमूहेतोक्तानां बाधकानां
मध्ये कचित्स्वप्रज्ञया समादध्यात् तत्र च खंडनवादिनः प्रस्तुता
प्रतिक्रिया न प्रस्फुरेत् तदा परेण प्रयुज्यमाने वाक्ये बहुपदात्मके
कस्यचित्पदस्यार्थं खंडयितुं खंडनान्तरमवतारणीयम् । एवं
तत्रापि परेण प्रज्ञाशोषणे पुनस्तथैव शाखांतरेषु संक्रमणीयम्
इति खंडनमये चक्रे सम्यगवधेयम् इति ॥

तत्तुल्यौहस्तदीयश्वयोजनं विषयांतरे । शृङ्खला तस्यशोषे
च त्रिधा भ्रमति मत्क्रिया ॥ १ ॥

इति श्री मत्सर्वतंत्रस्वतंत्र विद्यावाचस्पतिदेवराज पं० देवदत्तशर्मविरचिते
वेदान्तसिद्धान्तमतमार्त्तण्डे तर्कसंचयोनाम द्वितीयः पादः समाप्तः

# अथ वेदान्त सिद्धान्त मत मार्तण्डे

## तृतीय पादे विषयानुक्रमणिका ।



❀ इति ❀

# अथ वेदान्त सिद्धान्त मतमार्तण्ड

सर्वतंत्रस्वतंत्र विद्यावाचस्पति देवराज पं० दवदत्तशर्मविरचिते

## * सर्वमतसंग्रहाभिधः तृतीयः पादः *

प्रारभ्यते



नित्यज्ञानाश्रयं वन्दे निःश्रेयसनिधं शिवम् ।
येनैव जातं मह्यादि तेनैवेदं सकर्तृकम् ॥
पारं गतं सकलदर्शनसागराणामात्मोचितार्थिचरितर्थितसर्वलोकम्।*
श्रीशार्ङ्गपाणितनयं निखिलागमज्ञंसर्वज्ञविष्णुगुरुमन्वहमाश्रयेऽहम् ॥

श्रीमत्सायणदुग्धाब्धिकौस्तुभेन महौजसा ।
क्रियतेमाधवार्य्येण सर्वदर्शनसंग्रहः ॥
पूर्वेषामतिदुस्तराणि सुतरामालोड्य शास्त्राण्यसौ
श्रीमत्सायणमाधवः प्रभुरुपन्यास्थत् सतां प्रीतये ।

---

* आत्मोचिताचरितमर्थितसर्वलोकमिति पाठान्तरम्।

दूरोत्सारितमत्सरेण मनसा शृण्वन्तु तत् सज्जना
माल्यं कस्य विचित्रपुष्परचितं प्रीत्यै न सञ्जायते ॥

अथ कथं परमेश्वरस्य निःश्रेयसप्रदत्वमभिधीयते बृहस्पति मतानुसारिणा नास्तिकशिरोमणिना चार्वाकेण दूरोत्सारितत्वात्। दुरुच्छेदं हि चार्वाकस्य चेष्टितम् । प्रायेण सर्वप्राणिनस्तावत्

यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः ।
भस्मीभूतस्य देहस्य पुनरागमनं कुत इति ॥

लोकगाथामनुरुन्धाना नीतिकामशास्त्रानुसारेणार्थकामावेव पुरुषार्थौ मन्यमानाः पारलौकिकमर्थमपह्नवानाश्चार्वाकमतमनुवर्त्तमाना एवानुभूयन्ते । अतएव तस्य चार्वाकमतस्य लोकायतमित्यन्वर्थमपरं नामधेयम् ।

तत्र पृथिव्यादीनि भूतानि चत्वारि तत्त्वानि । तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवत् चैतन्यमुपजायते, तेषु विनष्टेषु सत्सु स्वयं विनश्यति ।

तदिह विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति, न प्रेत्य संज्ञास्तीति ।

तत् चैतन्यविशिष्टदेह एवात्मा देहातिरिक्त आत्मनि प्रमाणाभावात् प्रत्यक्षैकप्रमाणवादितया अनुमानादेरनङ्गीकारेण प्रामाण्याभावात् ।

अङ्गनालिङ्गनादिजन्यं सुखमेव पुरुषार्थः । न चास्य दुःखसंभिन्नतया पुरुषार्थत्वमेव नास्तीति मन्तव्यम्, अवर्जनीयतया प्राप्तस्य दुःखस्य परिहारेण सुखमात्रस्यैव भोक्तव्यत्वात् । तद्यथा मत्स्यार्थी सशल्कान् सकण्टकान् मत्स्यानुपादत्ते । स यावदादेयं तावदादाय निवर्त्तते । यथा वा धान्यार्थी सपलालानि धान्यान्याहरति । स यावदादेयं तावदादाय निवर्त्तते । तस्माद् दुःखभयान्नानुकूलवेदनीयं सुखं त्यक्तुमुचितम् । न हि मृगाः सन्तीति शालयो नोप्यन्ते । न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । यदि कश्चिद् भीरुर्दृष्टं सुखं त्यजेत् तर्हि स पशुवन्मूर्खो भवेत् । तदुक्तम्

त्याज्यं सुखं विषयसङ्गमजन्मपुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा ।
व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहितान् हितार्थी ॥

ननु पारलौकिकसुखाभावे बहुवित्तव्ययशरीरायाससाध्ये

अग्निहोत्रादौ विद्यावृद्धाः कथं प्रवर्त्तिष्यन्ते इति चेत् तदपि न प्रमाणकोटिं प्रवेष्टुमीष्टे अनृतव्याघातपुनरुक्तदोषैर्दूषिततया वैदिकम्मन्यैरेव धूर्त्तवकैः परस्परं कर्मकाण्डप्रामाण्यवादिभिर्ज्ञानकाण्डस्य, ज्ञानकाण्डप्रामाण्यवादिभिः कर्मकाण्डस्य च प्रतिक्षिप्तत्वेन त्रय्या धूर्त्तप्रलापमात्रत्वेन अग्निहोत्रादेर्जीविकामात्रप्रयोजनत्वात् । तथा चाभाणकः

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥

अतएव कण्टकादिजन्यं दुःखमेव नरकं लोकसिद्धो राजा परमेश्वरः देहोच्छेदो मोक्षः। देहात्मवादे च कृशोऽहं कृष्णोऽहमित्यादिसामानाधिकरण्योपपत्तिः । मम शरीरमिति व्यवहारो राहोः शिर इत्यादिवदौपचारिकः ।

तदेतत् सर्वं समग्राहि ।

अत्र चत्वारि भूतानि भूमिवार्य्यनलानिलाः ।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ।
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत् ॥
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः ।

देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः ॥

मम देहोऽयमित्युक्तिः सम्भवेदौपचारिकीति ॥

स्यादेतत् स्यादेव मनोरथो यद्यनुमानादेः प्रामाण्यं न स्यात्, अस्ति च प्रामाण्यं कथमन्यथा धूमोपलम्भानन्तरं धूमध्वजे प्रेक्षावतां प्रवृत्तिरुपपद्येत । नद्यास्तीरे फलानि सन्तीति वचन-श्रवणसमनन्तरं फलार्थिनां नदीतीरे प्रवृत्तिरिति । तदेतन्मनो-राज्यविजृम्भणम् । व्याप्तिपक्षधर्मताशालि हि लिङ्गं गमकमभ्यु-पगतमनुमानप्रामाण्यवादिभिः व्याप्तिश्चोभयविधोपाधिविधुरः सम्बन्धः । स च सत्तया चक्षुरादिवन्नाङ्गभावं भजते किन्तु ज्ञाततया । कः खलु ज्ञानोपायो भवेत । न तावत प्रत्यक्षं तच्च वाह्यमान्तरं वाभिमतम् । न प्रथमः तस्य सम्प्रयुक्तविषयज्ञान-जनकत्वेन भवति प्रसरसम्भवेऽपि भूतभविष्यतोस्तदसम्भवेन सर्वोपसंहारवत्या व्याप्तेर्दुर्ज्ञानत्वात् । न च व्याप्तिज्ञानं सामान्य-गोचरमितिमन्तव्यं व्यक्त्योरविनाभावाभावप्रसङ्गात।नापि चरमः अन्तःकरणस्य वहिरिन्द्रियतन्त्रत्वेन वाह्येऽर्थे स्वातन्त्र्येण प्रवृत्त्यनुपपत्तेः । तदुक्तम्

चक्षुराद्युक्तविषयं परतन्त्रं वहिर्मन इति ॥

नाप्यनुमानं व्याप्तिज्ञानोपायः तत्र तत्राप्येवमिति अनवस्था-

दौस्थ्यप्रसङ्गात । नापि शब्दस्तदुपायः काणादमतानुसारेणानु-मान एवान्तर्भावात् अनन्तर्भावे वा वृद्धव्यवहाररूपलिङ्गावग-तिसापेक्षतया प्रागुक्तदूषणलङ्घनाजङ्गालत्वात धूमधूमध्वजयोर-विनाभावोऽस्तीति वचनमात्रे मन्वादिवद् विश्वासाभावाच्च। अनुपदिष्टाविनाभावस्य पुरुषस्यार्थान्तरदर्शनेनार्थान्तरानुमित्य-भावे स्वार्थानुमानकथायाः कथाशेषत्वप्रसङ्गाच्च। उपमानादिकन्तु दूरापास्तं तेषां संज्ञासंज्ञिसम्बन्धादिबोधकत्वेनानौपाधिकसम्बन्ध-बोधकत्वासम्भवात् । किञ्च उपाध्यभावोऽपि दुरवगमः उपाधीनां प्रत्यक्षत्वानियमासम्भवेन प्रत्यक्षाणामभावस्य प्रत्यक्षत्वेऽपि अप्रत्य-क्षाणामभावस्याप्रत्यक्षतया अनुमानाद्यपेक्षायामुक्तदूषणानतिवृत्तेः।

अपिच साधनाव्यापकत्वे सति साध्यसमव्याप्तिरितितल्लक्षणं कक्षीकर्तव्यम् । तदुक्तम्

अव्याप्तसाधनो यः साध्यसमव्याप्तिरुच्यते स उपाधिरिति ।

शब्देऽनित्यत्वे साध्ये सकर्तृकत्वं घटत्वमश्रावणतां च व्यावर्त्तयितुमुपात्तान्यत्र क्रमतो विशेषणानि त्रीणि । तस्मादिद-मनवद्यं समासमेत्यादिनोक्तमाचार्य्यैश्चेति (१)। तत्र विध्यध्य-

(१) समासमाविनाभावावेकत्र स्तो यदा तदा ।
समेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजकः ॥

वसायपूर्वकत्वान्निषेधाध्यवसायस्योपाधिज्ञानेजाते तदभावविशिष्ट-सम्बन्धरूपं व्याप्तिज्ञानं व्याप्तिज्ञानाधीनं चोपाधिज्ञानमिति परस्पराश्रयवज्रप्रहारदोषो वज्रलेपायते। तस्मादविनाभावस्य दुर्बोधतया नानुमानाद्यवकाशः। धूमादिज्ञानानन्तरमग्न्यादिज्ञाने प्रवृत्तिः प्रत्यक्षमूलतया भ्रान्त्या वा युज्यते। क्वचित् फलप्रातिलम्भस्तु मणिमन्त्रौषधादिवत् यादृच्छिकः। अतस्तत्साध्यमदृष्टादिकमपिनास्ति। नन्वदृष्टानिष्टौ जगद्वैचित्र्यमाकास्मिकं स्यादितिचेव न तद्भद्रं स्वभावादेव तदुपपत्तेः। तदुक्तम्

अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथानिलः।
केनेदं चित्रितं तस्मात् स्वभावात्तद्व्यवस्थितिरिति ॥

तदेतत् सर्वं बृहस्पतिनाप्युक्तम्।

न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः॥
अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता॥
पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति।
स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते॥

मृतानामपि जन्तूनां श्राद्धं चेत् तृप्तिकारणम् ।
गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनम् ॥
स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र दानतः ।
प्रासादस्योपरिस्थानामत्र कस्मान्न दीयते ॥
यावज्जीवेत् सुखं जीवेदृणं कृत्वा घृतं पिवेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥
यदि गच्छेत् परं लोकं देहादेष विनिर्गतः ।
कस्माद्भूयो न चायाति बन्धुस्नेहसमाकुलः ॥
ततश्च जीवनोपायो ब्राह्मणैर्विहितस्त्विह ।
मृतानां प्रेतकार्य्याणि न त्वन्यद्विद्यते क्वचित् ॥
त्रयो वेदस्य कर्त्तारो भण्डधूर्त्तनिशाचराः ।
जर्फरीतुर्फरीत्यादि पण्डितानां वचः स्मृतम् ॥
अश्वस्यात्र हि शिश्नन्तु पत्नीग्राह्यं प्रकीर्त्तितम् ॥
भण्डैस्तद्वत परश्चैव ग्राह्यजातं प्रकीर्त्तितम् ॥
मांसानां खादनं तद्वान्निशाचरसमीरितामिति ॥

तस्माद् बहूनां प्राणिनामनुग्रहार्थं चार्वाकमतमाश्रयणीयमिति रमणीयम् ॥

इति वेदान्तसिद्धान्तमतमार्तण्डे चार्वाकदर्शनम् ॥

अत्र बौद्धैरभिधीयते यदभ्यधायि अविनाभावो दुर्बोध इति तदसाधीयः तादात्म्यतदुत्पत्तिभ्यामविनाभावस्य सुज्ञानत्वात् । तदुक्तम्

कार्य्यकारणभावाद् वा स्वभावाद् वा नियामकात् ।
अविनाभावनियमो दर्शनान्तरदर्शनादिति ॥

अन्वयव्यतिरेकाववविनाभावनिश्चायकाविति ननु पक्षे साध्यसाधनयोरव्यभिचारो दुरवधारणो भवेत् भूते, भविष्यति, वर्त्तमाने अनुपलभ्यमाने च व्यभिचारशङ्काया अनिवारणात् । ननु तथाविधस्थले तावकेऽपि मते व्यभिचारशङ्का दुष्परिहरेति चेत् मैवं वोचः विनापि कारणं कार्य्यमुत्पद्यतामित्येवंविधायाः शङ्काया व्याघातावधिकतया निवृत्तत्वात् । तदेव ह्याशङ्क्येत यस्मिन्नाशङ्क्यमाने व्याघातादयो नावतरेयुः । तदुक्तं, व्याघातावधिराशङ्केति ॥ तस्मात्तदुत्पत्तिनिश्चयेन अविनाभावो निश्चीयते, तदुत्पत्तिनिश्चयश्च कार्य्यहेत्वोः प्रत्यक्षोपलम्भानुपलम्भपञ्चकनिबन्धनः । कार्य्यस्योत्पत्तेः प्रागनुपलम्भः, कारणोपलम्भे सत्युपलम्भः, उपलब्धस्य पश्चात् कारणानुपलम्भादनुपलम्भ इति पञ्चकारण्या धूमधूमध्वजयोः कार्य्यकारणभावो निश्चीयते । तथा तादात्म्यनिश्चयेनाप्यविनाभावो निश्चीयते । यदि शिंशपा

वृक्षत्वमतिपतेत् स्वात्मानमेव जह्यादिति विपक्षे बाधकप्रवृत्तेः। अप्रवृत्ते तु बाधके भूयः सहभावोपलम्भेऽपि व्यभिचारशङ्कायाः को निवारयिता। शिंशपावृक्षयोश्च तादात्म्यनिश्चयो वृक्षोऽयं शिंशपेति सामानाधिकरण्यबलादुपपद्यते। न ह्यत्यन्ताभेदे तत सम्भवति पर्य्यायत्वेन युगपदपि प्रयोगायोगात। नाप्यत्यन्तभेदे गवाश्वयोरनुपलम्भात। तस्मात् कार्य्यात्मानौ कारणमात्मानमनुमापयत इति सिद्धम्।

यदि कश्चित् प्रामाण्यमनुमानस्य नाङ्गीकुर्य्यात तं प्रति ब्रूयात अनुमानं प्रमाणं न भवतीत्येतावन्मात्रमुच्यते तत्र न किञ्चन साधनमुपन्यस्यते वा। न प्रथमः, एकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधयेदिति न्यायात्॥

नापि चरमः अनुमानं प्रमाणं न भवतीति ब्रुवाणेन त्वया अ[illegible]रस्कवचनस्योपन्यासे मम माता बन्ध्येतिवद् व्याघातापातात्। किञ्च प्रमाणतदाभासव्यवस्थापनं तत्समानजातीयत्वादिति वदता भवतैव स्वीकृतं स्वभावानुमानम्। परमता विप्रतिपत्तिस्तु वचनलिङ्गेनेति ब्रुवता कार्य्यलिङ्गकमनुमानम्। अ[illegible]पलब्ध्या कञ्चिदर्थं प्रतिषेधयतानुपलब्धिलिङ्गकमनुमानम्। तथाचोक्तं तथागतैः।

देवादिशब्दानां परमात्मपर्य्यन्तत्वमुक्तं तत्त्वमुक्तावल्यां चतुरन्तरे च ।

जीवं देवादिशब्दो वदाति तदपृथक् सिद्धभावाभिधानं
निष्कर्षाकूतयुक्तो बहुरिह च दृढ़ो लोकवेदप्रयोगः ।
आत्मासम्बन्धकाले स्थितिरनवगता देवमर्त्यादिमूर्त्ति-
र्जीवात्मानुप्रवेशाज्जगति विभुरपि व्याकरोन्नामरूपे ॥

इत्यनेन देवादिशब्दानां शरीरपर्य्यन्तत्वं प्रतिपाद्य संस्था-नैक्याद्यभाव इत्यादिना शरीरलक्षणं दर्शयित्वा शब्दैस्तत्त्वस्व-रूपप्रतिपत्तिभिरित्यादिना विश्वेश्वरादपृथक्सिद्धत्वमुपपाद्य निष्कर्षाकूतेत्यादिना पद्येन सर्वेषां शब्दानां परमात्मपर्य्यन्तत्वं प्रतिपादितं तत सर्वं तत एवावधार्य्यम् । अयमेवार्थः समर्थितो वेदार्थसंग्रहे नामरूपश्रुतिव्याकरणसमये रामानुजेन ।

किञ्च सर्वप्रमाणस्य सविशेषविषयतयानिर्विशेषवस्तुनि न किमपि प्रमाणं समास्ति निर्विकल्पकप्रत्यक्षेऽपि सविशेषमेव वस्तु प्रतीयते । अन्यथा सविकल्पके सोऽयमिति पूर्वप्रतिपन्नप्रकार-विशिष्टप्रतीत्यनुपपत्तेः । किञ्च तत्त्वमस्यादिवाक्यं न प्रपञ्चस्य बाधकं भ्रान्तिमूलकत्वात् । भ्रान्तिप्रयुक्तरज्जुसर्पवाक्यवत नापि ब्रह्मात्मैक्य ज्ञानं निवर्त्तकं तत्र प्रमाणाभावस्य प्रागेवोपपादनात् । न च प्रपञ्चस्य

सत्यत्वप्रतिष्ठापनपक्षे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाव्याकोपः प्रकृतिपुरुषमहदहङ्कारतन्मात्रभूतेन्द्रियचतुर्दशभुवनात्मकब्रह्माण्ड-तदन्तर्वर्त्तिदेवतिर्य्यङ्मनुष्यस्थावरादिसर्वप्रकारसंस्थानसंस्थितं का-र्य्यमपि सर्वं ब्रह्मैवेति कारणभूतब्रह्मात्मज्ञानादेव सर्वविज्ञानं भवतीत्येकविज्ञानेन सर्वविज्ञानस्योपपन्नतरत्वात । अपिच ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वे सर्वस्यासत्वादेवैकविज्ञानेन सर्वविज्ञानं बाध्येत नामरूपविभागानर्हसूक्ष्मदशावत् प्रकृति-पुरुषशरीरं ब्रह्मकारणावस्थं जगतस्तदापत्तिरेव प्रलयः नामरूप-विभागविभक्तस्थूलचिदचिद्वस्तुशरीरं ब्रह्मकार्य्यावस्थं ब्रह्मणस्तथा विधस्थूलभावश्च सृष्टिरित्यभिधीयते । एवञ्च कार्य्य-कारणयोरनन्यत्वमप्यारम्भणाधिकरणे प्रतिपादितमुपपन्नतरं भवति । निर्गुणवादाश्च प्राकृतहेयगुणनिषेधविषयतया व्यवस्थिताः । नानात्वनिषेधवादाश्च एकस्यैव ब्रह्मणः शरीरतया प्रकारभूतं सर्वं चेतनाचेतनात्मकं वस्त्विति सर्वस्यात्मतया सर्वप्रकारं ब्रह्मैवावस्थितमिति सर्वात्मकब्रह्मपृथग्भूतवस्तुसद भावनिषेधपरत्वाभ्युपगमेन प्रतिपादिताः। किमत्र तत्त्वं भेदअभेदः उभयात्मकं वा सर्वं तत्त्वम् । तत्र सर्वशरीरतया सर्वप्रकारं ब्रह्मैवावस्थितमित्यभेदोऽभ्युपेयते एकमेव ब्रह्मनानाभूतचिद-चित्प्रकारं नानात्वेनावस्थितमिति भेदाभेदौ चिदचिदीश्वराणां

स्वरूपस्वभाववैलक्षण्यादसंकराच्च भेदः । तत्र चिद्रूपाणां जीवात्मनामसङ्कुचितापरिच्छिन्ननिर्मलज्ञानरूपाणामनादिकर्मरूपाविद्यावेष्टितानां तत्तत्कर्मानुरूपज्ञानसङ्कोचविकाशौ भोग्यभूताचित् भोक्ता संसर्गः तदनुगुणसुखदुःखोपभोगद्वयवत् कृता भगवत्प्रतिपत्तिः भगवत्पदप्राप्तिरित्यादयः स्वभावाः । अचिद्वस्तूनान्तु भोग्यभूतानामचेतनत्वमपुरुषार्थत्वं विकारास्पदत्वमित्यादयः परस्येश्वरस्य भोक्तृभोग्ययोरुभयोरन्तर्यामिरूपेणावस्थानमपरिच्छेद्यज्ञानैश्वर्य्यवीर्य्यशक्तितेजःप्रभृत्यनवस्थितिकातिशयासंख्येयकल्याणगुणगणता स्वसङ्कल्पप्रवृत्तस्वेतरसमस्तचिदचिद्वस्तुजातता स्वाभिमतस्वानुरूपैकरूपदिव्यरूपनिरतिशयविविधानन्तभूषणतेत्यादयः वेङ्कटनाथेन त्वित्थं निराटङ्कि पदार्थविभागः ।

द्रव्याद्रव्यप्रभेदायितमुभयाविधं तद्विधं तत्वमाहुः
द्रव्यं द्वेधा विभक्तं जड़मजड़ामिति प्राच्यमव्यक्तकालौ ।
अन्त्यं प्रत्यक् पराक् च प्रथममुभयथा तत्र जीवेशभेदात्
नित्या भूतिर्मतिश्चेत्यपरामिह जड़ामादिमां केचिदाहुः॥

तत्र

द्रव्यं नाना दशावत् प्रकृतिरिह गुणैः सत्त्वपूर्वैरुपेता
कालोऽब्दाद्याकृतिः स्यादणु रवगातमान् जीव ईशोऽन्यआत्मा ।

संप्रोक्ता नित्यभूतिस्त्रिगुणसमधिका सत्त्वयुक्ता तथैव
ज्ञातुर्ज्ञेयावभासा मतिरिति कथितं संग्रहाद्द्रव्यलक्ष्म ॥

इत्यादिना ।

तत्र चिच्छब्दवाच्याजीवात्मानः परमात्मनः सकाशाद् भिन्नाः नित्याश्च । तथाच श्रुतिः,'द्वा सुपर्णा सयुजासखायेत्यादिका । अतएवोक्तं नानात्मानो व्यवस्थात इति । तन्नित्यत्वमपि श्रुतिप्रसिद्धम् ।

न जायते म्रियते वा विपश्चि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे इति ॥

अपरथा कृतप्रणाशाकृताभ्यागमप्रसङ्गः ।अतएवोक्तं वीतरागजन्मादर्शनादिति । तदणुत्वमपि श्रुतिप्रसिद्धम् ।

बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भोगो जीवः स विज्ञेयः स चानन्त्याय कल्पत इति ॥

'आराग्रमात्रः पुरुषोऽणुरात्मा चेतसा वेदितव्य' इति च ॥

अचिच्छब्दवाच्यं दृश्यं जडं जगत् त्रिविधं भोग्यभोगोपकरणभोगायतनभेदात् । तस्य जगतः कर्त्तोपादानञ्चश्च पदार्थः पुरुषोत्तमो वासुदेवादिपदवेदनीयः । तदप्युक्तम् ।

वासुदेवः परं ब्रह्म कल्याणगुणसंयुतः ।
भुवनानामुपादानं कर्त्ता जीवनियामक इति ॥

स एव वासुदेवः परमकारुणिको भक्तवत्सलःपरमपुरुषस्तदुपासकानुगुणतत्तत्फलप्रदानाय स्वलीलावशादर्चाविभवव्यूहसूक्ष्मान्तर्यामिभेदेन पञ्चधावतिष्ठते । तत्रार्चा नाम प्रतिमादयः । रामाद्यवतारो विभवः । व्यूहश्चतुर्विधः वासुदेवसंकर्षणप्रद्युम्नानिरुद्धसंज्ञकः सूक्ष्मं सम्पूर्णं षड्गुणं वासुदेवाख्यं परं ब्रह्म । गुणा अपहतपाप्मत्वादयः । 'सोऽपहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सः सत्यकामः सत्यसंकल्प' इति श्रुतेः । अन्तर्यामी सकलजीवनियामकः 'य आत्मनि तिष्ठन्नात्मानमन्तरोयमयतीति' श्रुतेः । तत्र पूर्वपूर्वमूर्त्युपासनया पुरुषार्थपरिपन्थिदुरितनिचयक्षये सत्युत्तरोत्तरमूर्त्युपास्त्याधिकारः । तदुक्तम्,

वासुदेवः स्वभक्तेषु वात्सल्यात् तत्तदीहितम् ।
अधिकार्य्यानुगुण्येत प्रयच्छति फलं बहु ॥
तदर्थं लीलया स्वीयाः पञ्च मूर्त्तीः करोति वै ।

प्रतिमा कमर्चा स्या वतारास्तु वैभवाः ॥
संकर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः ।
व्यूहश्चतुर्विधो ज्ञेयः सूक्ष्मं सम्पूर्णषड्गुणम् ॥
तदेव वासुदेवाख्यं परं ब्रह्म निगद्यते ।
अन्तर्यामी जीवसंस्थो जीवप्रेरक इरितः ॥
य आत्मनीतिवेदान्तवाक्यजालैर्निरूपितः ।
अर्चोपासनया क्षिप्ते कल्मषेऽधिकृतो भवेत ॥
विभवोपासने पश्चाद् व्यूहोपास्तौ ततः परम् ।
सूक्ष्मे तदनु शक्तः स्यादन्तर्यामिणमीक्षितुमिति ॥

तदुपासनञ्च पञ्चविधम् अभिगमनमुपादानमिज्या स्वाध्यायो योग इति श्रीपञ्चरात्रेऽभिहितम् । तत्राभिगमनं नाम देवतास्थानमार्गस्य संमार्जनोपलेपनादि । उपादानं नाम गन्धपुष्पादिपूजासाधनसम्पादनम् । इज्या नाम देवतापूजनम् । स्वाध्यायो नाम अर्थानुसन्धानपूर्वको मन्त्रजपो वैष्णवसूक्तस्तोत्रपाठो नामसंकीर्त्तनं तत्त्वप्रतिपादकशास्त्राभ्यासश्च । योगो नाम देवतानुसन्धानम् । एवमुपासनाकर्मसमुच्चितेन विज्ञानेन दृष्टदर्शने नष्टे भगवद्भक्तस्य तन्निष्ठस्य भक्तवत्सलः परमकारुणिकः पुरुषोत्तमः स्वयाथात्मयानुभवानुगुणनिरवधिकानन्तरूपं पुनरावृत्तिरहितं स्वपदं प्रयच्छति । तथाच स्मृतिः,

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गता इति ॥
स्वभक्तं वासुदेवोऽपि संप्राप्यानन्दमक्षयम् ।
पुनरावृत्तिरहितं स्वीयं धाम प्रयच्छतीति च ॥

तदेतत सर्वं हृदि निधाय महोपनिषन्मतावलम्बनेनभगवद्बोधायनाचार्य्यकृतां ब्रह्मसूत्रवृत्तिं विस्तीर्णामालक्ष्य रामानुजः शारीरिकमीमांसाभाष्यमकार्षीत् । तत्राथातो ब्रह्मजिज्ञासेति प्रथमसूत्रस्यायमर्थः । अत्र अथशब्दः पूर्वप्रवृत्तकर्माधिगमनानन्तर्य्यार्थः । तदुक्तं वृत्तिकारेण, वृत्तात् कर्माधिगमादनन्तरं ब्रह्म विविदिषतीति । अतःशब्दो हेत्वर्थः अधीतसाङ्गवेदस्याधिगततदर्थस्य विनश्वरफलात् कर्मणो विरक्तत्वाद्धेतोः स्थिरमोक्षाभिलाषुकस्य तदुपायः तब्रह्मजिज्ञासा भवति । ब्रह्मशब्देन स्वभावतो निरस्तसमस्तदोषानवधिकातिशयासंख्येययकल्याणगुणः पुरुषोत्तमो ऽभिधीयते । एवञ्च कर्मज्ञानस्य तदनुष्ठानस्य च वैराग्योत्पादनद्वारा चित्तकल्मषापनयनद्वारा च ब्रह्मज्ञानं प्रति साधनत्वेन तयोः कार्य्यकारणत्वेन पूर्वोत्तरमीमांसयोरेकशास्त्रत्वम् । अतएव वृत्तिकारा एकमेवेदं शास्त्रं जैमिनीयेन षोड़शलक्षणेनेत्याहुः । कर्मफलस्य क्षयित्वं ब्रह्मज्ञानफलस्य चाक्षयित्वं परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेनेत्याद्याः श्रुतिभि-

रनुमानार्थापत्त्युपबृंहिताभिः प्रत्यपादि । एकैकनिन्दया कर्मविशिष्टस्य ज्ञानस्य मोक्षसाधनत्वं दर्शयति श्रुतिः 'अन्धं तमः प्रविशन्तिये विद्यामुपासते ततो भूय इवते तमो य उ विद्यायां रताः । विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' इत्यादि । तदुक्तं पाञ्चरात्ररहस्ये ।

स एव करुणासिन्धुर्भगवान् भक्तवत्सलः ।
उपासकानुरोधेन भजते मूर्त्तिपञ्चकम् ॥
तदर्चाविभवव्यूहसूक्ष्मान्तर्यामिसंज्ञकः ।
यदाश्रित्यैव चिद्वर्गस्तत्तज्ज्ञेयं प्रपद्यते ॥
पूर्वपूर्वोदितोपास्तिविशेषक्षीणकल्मषः ।
उत्तरोत्तरमूर्त्तीनामुपास्त्यधिकृतो भवेत ॥
एवं ह्यहरहः श्रौतस्मार्त्तधर्मानुसारतः ।
उक्तोपासनया पुंसां वासुदेवः प्रसीदति ॥
प्रसन्नात्मा हरिर्भक्त्या निदिध्यासनरूपया ।
अविद्यां कर्मसङ्घातरूपां सद्यो निवर्त्तयेत् ॥
ततः स्वाभाविकाः पुंसांते संसारतिरोहिताः ।
आविर्भवन्ति कल्याणाः सर्वज्ञत्वादयो गुणाः ॥
एवं गुणाः समानाः स्युर्मुक्तानामीश्वरस्य च ।

सर्वकर्तृत्वमेवैकं तेभ्यो देवे विशिष्यते ॥

मुक्तास्तु शेषिणि ब्रह्मण्यशेषे शेषरूपिणः ।

सर्वानश्नुवते कामान् सह तेन विपश्चितेति ॥

तस्मात्तापत्रयातुरैरमृतत्वाय पुरुषोत्तमादिपदवेदनीयं ब्रह्म जिज्ञासितव्यमित्युक्तं भवति । प्रकृतिप्रत्ययौ प्रत्ययार्थं प्राधान्येन सह ब्रूत इतः स नोऽन्यत्रेतिवचनबलादिच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधेयं तच्च ध्यानोपासनादिशब्दवाच्यं वेदनं न तु वाक्यजन्यमापातज्ञानं पदसन्दर्भश्राविणो व्युत्पन्नस्य विधानमन्तरेणापिप्राप्तत्वात् 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'आत्मेत्येवोपासीत' 'विज्ञाय प्रज्ञां कुर्वीत' 'अनुविद्य विजानातीत्यादिश्रुतिभ्यः' । अत्र श्रोतव्य इत्यनुवादः अध्ययनविधिना साङ्गस्य स्वाध्यायस्य ग्रहणे अधीतवेदस्य पुरुषस्य प्रयोजनवदर्थदर्शनात्तन्निर्णयाय स्वरसत एव श्रवणे प्रवर्त्तमानतया तस्य प्राप्तत्वात् । मन्तव्य इति चानुवादः श्रवणप्रतिष्ठार्थत्वेन मननस्यापि प्राप्तत्वादप्राप्ते शास्त्रमर्थवदिति न्यायात् । ध्यानञ्च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा वा स्मृतिः स्मृतिप्रतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति ध्रुवायाः स्मृतेरेव मोक्षोपायत्वश्रवणात् । सा च स्मृतिर्दर्शनसमानाकारा ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

इत्यनेनैकत्वात्। तथाच 'आत्मा वा अरे द्रष्टव्य' इत्यनेनास्यादर्शनरूपता विधीयते। भवति च भावनाप्रकर्षात स्मृतेर्दर्शनरूपत्वम्। वाक्यकारेणैतत् सर्वं प्रपञ्चितं वेदनमुपासनं स्यादित्यादिना। तदेव ध्यानं विशिनष्टि श्रुतिः, 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामिति'। प्रियतम एव हि वरणीयो भवति यथायं प्रियतममात्मानं प्राप्नोति तथा स्वयमेव भगवान् प्रियतम इति भगवतैवाभिहितम्।

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते इति ॥
पुरुषः स परः पार्थ ! भक्त्या लभ्यस्त्वनन्ययेति च ॥

भक्तिस्तु निरतिशयानन्दप्रियानन्यप्रयोजनसकलेतरवैतृष्णयवज्ज्ञानविशेष एव। तत्सिद्धिश्च विवेकादिभ्यो भवतीति वाक्यकारेणोक्तं तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः सम्भवान्निर्वचनाच्चेति। तत्र विवेको नामादुष्टान्नात सत्त्वशुद्धिः, अत्र निर्वचनम् आहारशुद्धेः सत्त्वशुद्धिः, सत्त्वशुद्धया ध्रुवा स्मृतिरिति। विमोकः कामानभिष्वङ्गः शान्त

उपासीतेति निर्वचनम् । पुनः पुनः संशीलनमभ्यासः नि॰चनञ्च स्मार्त्तमुदाहृतं भाष्यकारेण सदा तद्भावभावित इति । श्रौतस्मार्त्तकर्मानुष्ठानं शक्तितः क्रिया क्रियावानेष ब्रह्मविदां वरिष्ठ इति निर्वचनम् सत्यार्जवदयादानादीनि कल्याणानि सत्येन लभ्यत इत्यादिनिर्वचनम् दैन्यविपर्य्ययाऽनवसादः 'नायमात्मा बलहीनेन लभ्यत इति निर्वचनम् ताद्विपर्य्ययजा तुष्टिरनुद्धर्षः शान्तो दान्त इति निर्वचनम् । तदेवमेवंविधनियमविशेषसमासादित-पुरुषोत्तमप्रसाद विध्वस्ततमः स्यान्तस्य अनन्यप्रयोजनानवरत-निरतिशयप्रियवदात्मप्रत्ययावभासतापन्नध्यानरूपया भक्त्या पुरुषोत्तमपदं लभ्यत इति सिद्धम् । तदुक्तं यामुनेन, उभयपरिकर्मितस्वान्तस्यैकान्तिकात्यन्तिकभक्तियोगलभ्य इति ज्ञानकर्मयोगसंस्कृतान्तःकरणस्येत्यर्थः ।

किं पुनर्ब्रह्म जिज्ञासितव्यमित्यपेक्षायां लक्षणमुक्तं जन्माद्यस्य यत इति । जन्मादीति सृष्टिस्थितिप्रलयं तद्गुणसंविज्ञानो बहुव्रीहिः अस्याचिन्त्यविविधरचनारच्यस्य नियतदेशकालभोगब्रह्मादिस्तम्बपर्य्यन्तक्षेत्रज्ञामिश्रस्य जगतः यतो यस्मात् सर्वेश्वरात् निखिलहेयप्रत्यनीकस्वरूपात् सत्यसङ्कल्पाद्यनवधिकातिशयासंख्येयकल्याणगुणात सर्वज्ञात् सर्वशक्तेः पुंसः सृष्टिस्थितिप्रलयाः प्रवर्त्तन्त इति सूत्रार्थः ।

इत्थम्भूते ब्रह्मणि किं प्रमाणमिति जिज्ञासायां शास्त्रमेव प्रमाणमित्युक्तं शास्त्रयोनित्वादिति। शास्त्रं योनिः कारणं प्रमाणं यस्य तच्छास्त्रयोनिः तस्य भावस्तत्त्वं तस्माद् ब्रह्मज्ञानकारणात्मज्ञानकारणत्वात् शास्त्रस्य तद्योनित्वं ब्रह्मण इत्यर्थः। न च ब्रह्मणः प्रमाणान्तरगम्यत्वं शङ्कितु शक्यमतीन्द्रियत्वेन प्रत्यक्षस्य तत्र प्रवृत्त्यनुपपत्तेः। नापि महार्णवादिकं सकर्तृकं कार्य्यत्वात् घटवत् इत्यनुमानस्य पूतिकूष्माण्डायमानत्वात्। तल्लक्षणं, ब्रह्म यतो वा इमानि भूतानीत्यादिवाक्यं प्रतिपादयतीति स्थितम्।

यद्यपि ब्रह्म प्रमाणान्तरगोचरतां नावतरति तथापि प्रवृत्तिनिवृत्तिपरत्वाभावसिद्धरूपं ब्रह्म शास्त्रं प्रतिपादयितुं प्रभवतीति एतत्पर्य्यनुयोगपरिहारायोक्तं तत्तु समन्वयादिति। तुशब्दः प्रसक्ताशङ्काव्यावृत्त्यर्थः तच्छास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवत्येव कुतः समन्वयात् परमपुरुषार्थ भूतस्यैव ब्रह्मणोऽभिधेयतयान्वयादित्यर्थः। न च प्रवृत्तिनिवृत्त्योरन्यतरविरहिणः प्रयोजनशून्यत्वं स्वरूपपरेष्वपि पुत्रस्ते जातः नायं सर्पं इत्यादिषु हर्षभयनिवृत्तिरूपप्रयोजनवत्त्वं दृष्टमेवेति न किञ्चिदनुपपन्नम्। दिङ्मात्रमत्र प्रदर्शितं विस्तरस्त्वाकरादेवावगन्तव्य इति विस्तरभीरुणोदास्यत इति सर्वमनाकुलम्।

इति वेदान्त सिद्धान्त मत मार्तण्डे रामानुजदर्शनम्।

तदेतद्रामानुजमतं जीवाणुत्वदासत्ववेदापौरुषेयत्वसिद्धार्थबोधकत्वस्वतः-प्रमाणत्वप्रमाणत्रित्वपाञ्चरात्रोपजीव्यत्वप्रपञ्चभेदसत्यत्वादिसाम्येऽपि परस्परविरुद्धभेदादिपक्षत्रयकक्षीकारेण क्षपणकपक्षनिक्षिप्तमित्युपेक्षमाणः 'स आत्मातत्त्वमसीत्यादेर्वेदान्तवाक्यजातस्य भङ्ग्यन्तरेणार्थान्तरपरत्वमुपपाद्य ब्रह्ममीमांसाविवरणव्याजेनानन्दतीर्थः प्रस्थानान्तरमास्थित । तन्मते हि द्विविधतत्त्वं स्वतन्त्रास्वतन्त्रभेदात् । तदुक्तं तत्त्वविवेके ।

स्वतन्त्रमस्वतन्त्रञ्च द्विविधं तत्त्वमिष्यते ।
स्वतन्त्रो भगवान् विष्णुर्निर्दोषोऽशेषसद्गुण इति ॥

ननु सजातीयविजातीयस्वगतनानात्वशून्यं ब्रह्मतत्त्वमिति प्रतिपादकेषु वेदान्तेषु जागरूकेषु कथमशेषसद्गुणत्वं तस्य कथ्यत इति चेन्मैवं भेदप्रमाणकबहुप्रमाणविरोधेन तेषां तत्र प्रामाण्यानुपपत्तेः । तथाहि प्रत्यक्षं तावदिदमस्माद्भिन्नमिति नीलपीतादेर्भेदमध्यक्षयति । अथ मन्येथाः किं प्रत्यक्षभेदमेवाव गाहते किं वा धर्मिप्रतियोगिघटितम् । न प्रथमः धर्मिप्रतियोगि प्रतिपत्तिमन्तरेण तत्सापेक्षस्य भेदस्याशक्याध्यवसायत्वात् । द्वितीयोऽपि धर्मिप्रतियोगिग्रहणपुरःसरं भेदग्रहणमथवा युगपत् तत्सर्वग्रहणम् । न पूर्वः बुद्धेर्विरम्य व्यापाराभावात अन्योन्या

श्रयप्रसङ्गाच्च । नापि चरमः कार्य्यकारणबुद्ध्योर्ये [illegible]भावात् । धर्मिप्रतीतिर्हि भेदप्रत्ययस्य कारणं सन्निहितेऽपि धर्मिणि व्यवहितप्रतियोगिज्ञानमन्तरेण भेदस्याज्ञातत्वेनान्वयव्यतिरेकाभ्यां कार्य्यकारणभावावगमात । तस्मान्न भेदप्रत्यक्षं सुप्रसरमिति चेत् किं वस्तुस्वरूपभेदवादिनं प्रति इमानि दूषणान्युद्घुष्यन्ते किं धर्मिभेदवादिनं प्रति । प्रथमे चोरापराधान्माण्डव्यनिग्रहन्यायापातः भवदभिधीयमानदूषणानांतदविषयत्वात् । ननु वस्तुस्वरूपस्यैव भेदत्वे प्रतियोगिसापेक्षत्वं न घटते घटवत् प्रतियोगिसापेक्ष एव सर्वत्र भेदः प्रथत इति चेन्न प्रथमं सर्वतोविलक्षणतया वस्तुस्वरूपे ज्ञायमामे प्रतियोग्यपेक्षया विशिष्टव्यवहारोपपत्तेः । तथाहि परिमाणघटितं वस्तुस्वरूपं प्रथममवगम्यते पश्चात प्रतियोगिविशेषापेक्षया ह्रस्वं दीर्घमिति तदेव विशिष्य व्यवहारभाजनं भवति । तदुक्तं विष्णुतत्वनिर्णये, न च विशेषणविशेष्यतया भेदसिद्धिः । विशेषणविशेष्यभावश्च भेदापेक्षः धर्मिप्रतियोग्यपेक्षया भेदसिद्धिः भेदापेक्षश्च धर्मिप्रतियोगित्वमित्यन्योन्याश्रयतया भेदस्यायुक्तिः पदार्थस्वरूपत्वाद्भेदस्येत्यादिना । अतएव गवार्थिनो गवयदर्शनान्न प्रवर्त्तन्ते गोशब्दञ्च न स्मारन्ति । न च नीरक्षीरादौ स्वरूपे गृह्यमाणे भेदप्रतिभासोऽपि स्यादिति भणनीयं समानाभिहारादिप्रतिबन्धकबलाद्भेदभानव्यवहाराभावोपपत्तेः । तदुक्तम्,

अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्।
सौक्ष्म्याद् व्यवधानादभिभवात् समानाभिहाराच्चेति॥

अतिदूराद् गिरिशिखरवर्त्तितर्वादौ अतिसामीप्याल्लोचनाञ्जनादौ इन्द्रियघाताद्विद्युदादौ मनोऽनवस्थानात् कामाद्युपप्लुतमनस्कस्य स्फीतालोकवर्त्तिनि घटादौ सौक्ष्म्यात परमाण्वादौ व्यवधानात कुड्याद्यन्तर्हिते अभिभवात् दिवा प्रदीपप्रभादौ समानाभिहारात् नीरक्षीरादौ यथावदग्रहणं नास्तीत्यर्थः। भवतु वा धर्मभेदवादस्तथापि न कश्चिद्दोषः धर्मिप्रतियोगिग्रहणे सति धर्मभेदभानसम्भवात। न च धर्मभेदवादे तस्य तस्य भेदस्य भेदान्तरभेद्यत्वेनानवस्था दुरवस्था स्यादिन्यास्थेयं भदान्तरप्रसक्तौ मूलाभावात् भेदभेदिना भिन्नाविति व्यवहारादर्शनात। न चैकभेदबलेनान्यभेदानुमानं दृष्टान्तभेदाविघातेनोत्थानदोषाभावात्। सोऽयं पिण्याकयाचनार्थे गतस्य खारिकातैलदातृत्वाभ्युपगम इव। दृष्टान्तभेदविमर्दे त्वनुत्थानमेव। न हि वरविघाताय कन्योद्वाहः। तस्मान्मूलक्षयाभावादनवस्था न दोषाय। अनुमानेनापि भेदोऽवसीयते। परमेश्वरो जीवाद्भिन्नः, तं प्रति सेव्यत्वात् यो यं प्रति सेव्यः स तस्माद्भिन्नः यथा भृत्याद्राजा। न हि सुखं मे स्यात् दुःखं मे न मनागपि इति पुरुषार्थमर्थयमानाः पुरुषः स्वपातिपदं कामयमानाः

सत्का भाजो भवेयुः प्रत्युत सर्वानर्थभाजनं भवन्ति । यः स्वस्यात्मनो हीनत्वं परस्य गुणोत्कर्षञ्च कथयति स स्तुत्यः प्रीतः स्तावकस्य तस्याभीष्टं प्रयच्छति । तदाह,

घातयन्ति हि राजानो राजाहमिति वादिनः ।
ददत्यखिलमिष्टञ्च स्वगुणोत्कर्षवादिनामिति ॥

एवञ्च परमेश्वराभेदतृष्णया विष्णोर्गुणोत्कर्षस्य मृगतृष्णिकासमत्वाभिधानं विपुलकदलीफललिप्सया जिह्वाच्छेदनं हरति एतादृशविष्णुविद्वेषणादन्धतमसप्रवेशप्रसङ्गात । तत तत्प्रतिपादितं मध्यमन्दिरेण महाभारततात्पर्य्यनिर्णये ।

अनादिद्वेषिणो दैत्या विष्णोर्द्वेषो विवर्द्धितः ।
तमस्यन्धे पातयति दैत्यानन्धे विनिश्चयादिति ॥

सा च सेवा अङ्कननामकरणभजनभेदात्त्रिविधा । तत्राङ्कनं नारायणायुधादीनां तद्रूपस्मरणार्थमपेक्षितार्थसिद्ध्यर्थञ्च। तथाच शाकल्यसंहितापरिशिष्टम् ।

चक्रं बिभर्ति पुरुषोऽभितप्तं बलं देवानाममृतस्य विष्णोः ।
स याति नाकं दुरितावधूय विशन्ति यद् यतयो वीतरागाः ॥
देवाश्च येन विधृतेन बाहुना सुदर्शनेन प्रयातास्तमायन् ।

येनाङ्किता मनवो लोकसृष्टिं वितन्वन्ति ब्राह्मणास्तद्वहन्ति ॥
तद्विष्णोः परमं पदं येन गच्छन्ति लाञ्छिताः ।
उरुक्रमस्य चिह्नैरङ्किता लोके सुभगा भवाम इति ॥

अतप्ततनुर्नतदामो अश्नुते श्रितास इद्व न्तस्ततसमासतेति तैत्तिरीयकोपनिषच्च । स्थानविशेषश्चाग्नेयपुराणे दर्शितः ।

दक्षिणे तु करे विप्रो बिभृयाच्च सुदर्शनम् ।
सव्येन शङ्खं बिभृयादिति ब्रह्मविदो विदुरिति ॥

अन्यत्र चक्रधारणे मन्त्रविशेषश्च दर्शितः ।

सुदर्शनं महाज्वालं कोटिसूर्य्यसमप्रभम् ।
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ॥
त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
नमितः सर्वदेवैश्च पाञ्चजन्य ! नमोऽस्तु ते इति ॥

नामकरणं पुत्रादीनां केशवादिनाम्ना व्यवहारः सर्वदा तन्नामानुस्मरणार्थम् । भजनं दशविधं वाचा सत्यं हितं प्रियं स्वाध्यायः कायेन दानं परित्राणं परिरक्षणं मनसा दया स्पृहा श्रद्धा चेति । अत्रैकैकं निष्पाद्य नारायणे समर्पणं भजनम् । तदुक्तम्,

अङ्कनं नामकरणं भजनं दशधा च तदिति ॥

एवं ज्ञेयत्वादिनापि भेदोऽनुमातव्यः, तथा श्रुत्यापि भेदोऽपगन्तव्यः, सत्यमेतमनुविश्वे मदन्तिरातिं देवस्य गृणतो मघोनः सत्यासो अस्य महिमागृणे शवोयज्ञेषु विप्रराज्ये सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा मयि वारुण्यो मयि वारुण्यो मयि वारुण्य इति मोक्षानन्दभेदप्रतिपादकश्रुतिभ्यः ।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥

जगद्व्यापारवर्जप्रभुकरणासन्निहितत्वाच्चेत्यादिभ्यश्च । न च ब्रह्म वेद ब्रह्मैव भवतीति श्रुतिबलाज्जीवस्य पारमैश्वर्यं शक्यशङ्कं सम्पूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेदितिवत् वृंहितो भवतीत्यर्थपरत्वात् । ननु

प्रपञ्चो यदि वर्त्तेत निवर्त्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥

इति वचनात् द्वैतस्य कल्पितत्वमवगम्यत इति चेत् सत्यं भावमनभिसन्धायाभिधानात् । तथाहि यद्ययमुत्पद्येत तर्हि निवर्त्तेत न संशयः । तस्मादनादिरेवायां प्रकृष्टः पञ्चविधो

भेदप्रपञ्चः न चायमविद्यमानो मायामात्रत्वान्मायेति भगवदि-च्छोच्यते ।

महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येव तवेच्छानन्त कथ्यते ॥
प्रकृतिः प्रकृष्टकरुणाद्वासना वासयेद् यतः ।
अ इत्युक्ते हरिस्तस्य मायाऽविद्येति संज्ञिता ॥
मायेत्युक्ता प्रकृष्टत्वात् प्रकृष्टे हि मयाभिधा ।
विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्य्यते ॥
प्रज्ञप्तिरूपो हि हरिः सा च स्वानन्दलक्षणा ॥

इत्यादिवचननिचयप्रामाण्यबलात् सैव प्रज्ञा मानत्राणकर्त्री च यस्य तन्मायामात्रं ततश्च परमेश्वरेण ज्ञातत्वाद्रक्षितत्वाच्च न द्वैतं भ्रान्तिकल्पितं, न हीश्वरे सर्वस्य भ्रान्तिः सम्भवति विशेषादर्शननिबन्धनत्वाद् भ्रान्तेः । तर्हि तद्व्यपदेशः कथमित्यत्रोत्तरम् अद्वैतं परमार्थत इति परमार्थापेक्षया तेन सर्वस्मादुत्तमस्य विष्णुतत्वस्य समाभ्यधिकशून्यत्वमुक्तं भवति । तथाच परमा श्रुतिः ।

जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जड़जीवभिदा तथा ॥

मिथश्च जड़भेदो यः प्रपञ्चो भेदपञ्चकः ।
सोऽयं सत्योऽप्यनादिश्च सादिश्चेन्नाशमाप्नुयात ॥
न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः ।
कल्पितश्चेन्निवर्त्तेत न चासौ विनिवर्त्तते ॥
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ।
मतं हि ज्ञानिनामेतन्मितं त्रातं हि विष्णुना ॥
तस्मान्मात्रमिति प्रोक्तं परमो हरिरेव त्वित्यादि ॥

तस्माद्विष्णोः सर्वोत्कर्ष एव तात्पर्यं सर्वागमानाम् । एतदेवाभिसन्धायाभिहितं भगवता ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद् भजति मां सर्वभावेन भारत ॥
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारतेति ॥

महावराहेऽपि ।

मुख्यञ्च सर्ववेदानां तात्पर्य्यं श्रीपतौ परे ।
उत्कर्षे तु तदन्यत्र तात्पर्यं स्यादवान्तरमिति ॥

युक्तञ्च विष्णोः सर्वोत्कर्षे महातात्पर्य्यम् । मोक्षो हि सर्वपुरुषार्थोत्तमः । धर्मार्थकामास्त्वनित्याः । मोक्ष एव नित्यः । तस्मान्नित्यं तदर्थाय यतेत मतिमान्नर इति भाल्लवेयश्रुतेः । मोक्षश्च विष्णुप्रसादमन्तरेण न लभ्यते । यस्य प्रसादात परमा यत्स्वरूपात तस्मात् संसारान्मुच्यते नावरेसुरानाराधयन्तोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मादिति नारायणश्रुतेः।

तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं,
सर्वार्थकामैरलमल्पकास्ते ।
समाश्रिताद् ब्रह्मतरोरनन्तात
निःसंशयं मुक्तिफलं प्रयात इति ॥

विष्णुपुराणोक्तेश्च । प्रसादश्च गुणोत्कर्षज्ञानादेव नाभेदज्ञानादित्युक्तम् । न च तत्त्वमस्यादितादात्म्यव्याकोपः श्रुतितात्पर्यापरिज्ञानविजृम्भणात् ।

आह नित्यपरोक्षन्तु तच्छब्दो ह्यविशेषितः ।
त्वंशब्दश्चापरोक्षार्थे तयोरैक्यं कथं भवेत ॥

आदित्यो यूप इतिवत् सादृश्यार्था तु सा श्रुतिरिति। तथाच परमा श्रुतिः।

जीवस्य परमैक्यञ्च बुद्धिसारूप्यमेव वा।
एकस्थाननिवेशो वा व्यक्तिस्थानमपेक्ष्य वा॥
न स्वरूपैकता तस्य मुक्तस्यापि विरूपतः।
स्वातन्त्र्यपूर्णतेऽल्पत्वात्पारतन्त्र्ये विरूपतेति॥

अथवा तत्त्वमसीत्यत्र स एवात्मा स्वातन्त्र्यादिगुणोपेतत्वात् अतत्त्वमसि त्वं तन्न भवसि तद्रहितत्वादित्येकत्वमतिशयेन निराकृतम्। तदाह,

अतत्त्वमिति वा छेदस्तेनैक्यं सनिराकृतमिति॥

तत्तस्मात् दृष्टान्तवनकेऽपि स यथा शकुनिः सूत्रेण बद्ध इत्यादिना भेद एव दृष्टान्ताभिधानाय अयमभेदोपदेश इति तत्त्ववादरहस्यम्। तथाच महोपनिषत,

यथा पक्षी च सूत्रञ्च नानावृक्षरसा यथा।
यथा नद्यः समुद्राश्च शुद्धोदलवणे यथा॥
चारापहार्य्यौ च यथा यथा पुंविषयावपि।
तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ॥

तथापि सूक्ष्मरूपत्वान्न जीवात् परमो हरिः ।
भेदेन मन्ददृष्टीनां दृश्यते प्रेरकोऽपि सन् ॥
वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथेति ।
ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात् क्षराः ॥
लक्ष्मीरक्षरदेहत्वादक्षरातः परो हरिः ॥
स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैरखिलैर्गुणैः ।
निःसीमत्वेन ते सर्वे तद्वशाः सर्वदेवता इति ॥
विष्णुं सर्वगुणैः पूर्णं ज्ञात्वा संसारवर्जितः ।
निर्दुःखानन्दभुग्नित्यं तत्समीपे स मोदते ॥
मुक्तानाञ्चाश्रयो विष्णुराधिकाधिपातिस्तथा ।
तद्वशा एव सर्वे सर्वदेव स ईश्वर इति च ॥

एकविज्ञानेन सर्वविज्ञानञ्च प्रधानत्वकारणत्वादिना युज्यत न तु सर्वमिथ्यात्वेन । न हि सत्ताज्ञानेन मिथ्याज्ञानं सम्भवति । यथा प्रधानपुरुषाणां ज्ञानाज्ञानाभ्यां ग्रामो ज्ञातः अज्ञात इत्येवमादिव्यवदेशो दृष्ट एव । यथा च कारणे पितरि ज्ञाते जानात्यस्य पुत्रमिति । अन्यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातमित्यत्र एकपिण्डशब्दो वृथा प्रसज्येयातां मृदा विज्ञातयेत्येतावतैव वाक्यस्य पूर्णत्वात् । न च वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्येतत् कार्य्यस्य

मिथ्यात्वमात्रे इत्येष्टव्यं वाचारम्भणं विकारो यस्य तत् अविकृतं नित्यं नामधेयं मृत्तिकेत्यादिकमित्येतद्वचनं सत्यमिति तथ्यस्य स्वीकारात् । अपरथा नामधेयमेवेति शब्दयोर्वैयर्थ्यं प्रसज्येत । अतो न कुत्रापि जगतो मिथ्यात्वासिद्धिः । किञ्च प्रपञ्चो मिथ्येत्यत्र मिथ्यात्वं तथ्यमतथ्यं वा । प्रथमे सत्याद्वैतभङ्ग-प्रसङ्गः । चरमे प्रपञ्चसत्यत्वापातः । नन्वनित्यत्वं नित्य मनित्यंबा उभयथाप्यनुपपत्तिरित्याक्षेपवदयमपि नित्यसमजातिभेदः स्यात् । तदुक्तं न्यायनिर्वाणवेधसा, नित्यमनित्यभावादनित्य-नित्यत्वोपपत्तेर्नित्यसम इति । तार्किकरक्षायाञ्च,

धर्मस्य तदतद्रूपविकल्पानुपपत्तितः ।
धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेदिति ॥

अस्याः संज्ञायाः उपलक्षणत्वमभिप्रेत्याभिहितं प्रबोधसिद्धौ अन्वर्थित्वात्तूपरञ्जकधर्मसमेति । तस्मात् सदुत्तरमेतदिति चेत् अशिक्षितत्रासनमेतत् दुष्टत्वमूलानिरूपणात् । तद्द् द्विविधं साधारणमसाधारणञ्च । तत्राद्यं स्वव्याघातकं, द्वितीयं त्रिविधं न्यूनत्वमयुक्ताङ्गाधिकत्वमाविषयवृत्तित्वञ्चेति । तत्र साधारणमसम्भावितमेव उक्तस्याक्षेपस्य स्वव्याघातकत्वानुपलम्भात् । असाधारणमपि नास्त्यस्य नास्तितोक्तावस्तित्ववत् प्रकृतेप्युपपत्तेः । ननु प्रपञ्चस्य मिथ्यात्वमभ्युपेयते नासत्त्वमिति चेत्तदेतत् सोऽयं

शिरश्छेदेऽपि शतं न ददाति विंशतिपञ्चकन्तु प्रयच्छतीति शाकटिकवृत्तान्तमनुहरेत मिथ्यात्वासत्त्वयोः पर्य्यायत्वादित्यलमतिप्रपञ्चेन।

तत्राथातो ब्रह्मजिज्ञासेति प्रथमसूत्रस्यायमर्थः। तत्राथशब्दो मङ्गलार्थोऽधिकारानन्तर्य्यार्थश्च स्वीक्रियते। अतः शब्दो हेत्वर्थः। तदुक्तं गारुडे।

अथातःशब्दपूर्वाणि सूत्राणि निखिलान्यपि।
प्रारभेत नियत्यैव तत्किमत्र नियामकम्॥
कश्चार्थस्तु तयोर्विद्वान् कथमुत्तमता तयोः।
एतदाख्याहि मे ब्रह्मन् यथा ज्ञास्यामि तत्त्वतः॥
एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः।
आनन्तर्य्याधिकारे च मङ्गलार्थे तथैव च॥
अथशब्दस्त्वतःशब्दो हेत्वर्थे समुदीरित इति॥

यतो नारायणप्रसादमन्तरेण न मोक्षो लभ्यते प्रसादश्च ज्ञानमन्तरेण अतो ब्रह्मजिज्ञासा कर्त्तव्येति सिद्धम्। जिज्ञास्यब्रह्मणो लक्षणमुक्तं जन्माद्यस्य यत इति। सृष्टिस्थित्यादि यतो भवति तद् ब्रह्मेति वाक्यार्थः। तथा च स्कान्दं वचः।

उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः ।
बन्धमोक्षौ च पुरुषाद्यस्मात् स हरिरकराडिति ॥

यतो वा इमानीत्यादिश्रुतिभ्यश्च । तत्र प्रमाणमप्युक्तं शास्त्रयोनित्वादिति । नावेदविन्मनुते तं बृहन्तं तन्त्रोपनिषद-मित्यादिश्रुतिभ्यः तस्यानुमानिकत्वं निराक्रियते । न चानुमान-स्य स्वातन्त्र्येण प्रामाण्यमस्ति । तदुक्तं कौर्मे ।

श्रुतिसाहायरहितमनुमानं न कुत्रचित् ।
निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च ॥
श्रुतिस्मृतिसहायं यत प्रमाणान्तरमुत्तमम् ।
प्रमाणपदवीं गच्छेन्नात्र कार्य्या विचारणेति ॥

शास्त्रस्वरूपमुक्तं स्कान्दे ।

ऋग्यजुःसामाथर्वा च भारतं पाञ्चरात्रकम् ।
मूलरामायणञ्चैव शास्त्रमित्यभिधीयते ॥
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्त्तितम् ।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तदिति ॥

तदनेनानन्यलभ्यः शास्त्रार्थ इति न्यायेन भेदस्य प्राप्तत्वेन तत्र न तात्पर्य्यं किन्त्वद्वैत एव वेदवाक्यानां तात्पर्य्यमिति अद्वैतप्रत्याशा प्रतिक्षिप्ता अनुमानादीश्वरस्य सिद्ध्यभावेन

त..दस्यापि ततः सिद्ध्यभावात् । तस्मान्न भेदानुवादकत्वमिति तत्परत्वमवगम्यते । अतएवोक्तम्,

सदागमैकविज्ञेयं समतीतक्षराक्षरम् ।
नारायणं सदा वन्दे निर्दोषाशेषसद्गुणमिति ॥

शास्त्रस्य तत्र प्रामाण्यमुपपादितं तत्तु समन्वयादिति समन्वय उपक्रमादिलिङ्गम् उक्तं बृहत्संहितायाम् ।

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्य्यनिर्णय इति ॥

एवं वेदान्ततात्पर्य्यवशात् तदेव ब्रह्म शास्त्रगम्यमित्युक्तं भवति । दिङ्मात्रमत्र प्रादर्शि शिष्टमानन्दतीर्थभाष्यव्याख्यानादौ द्रष्टव्यं ग्रन्थवहुत्वभियोपरम्यत इति । एतच्च रहस्यं पूर्णप्रज्ञेन मध्यमन्दिरेण वायोस्तदीयावतारम्मन्येन निरूपितामिति ।

प्रथमस्तु हनूमान् स्यात् द्वितीयो भीम एव च ।
पूर्णप्रज्ञस्तृतीयश्च भगवत्कार्य्यसाधक इति ॥
एतदेवाभिप्रेत्य तत्र तत्र ग्रन्थसमाप्ताविदं पद्यं लिख्यते ।
यस्य त्रीण्युदितानि वेदवचने दिव्यानि रूपाण्यलं
बलतद्दर्शितमित्थमेतदखिलं वेदस्य गर्भे महः ।

वायो रामवचोनतं प्रथमकं वृक्षो द्वितीयं वपु-
र्मध्यो यस्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥

एतत्पद्यार्थस्तु बलित्थात्तद्विपुलियाधिदर्शितं देवस्य भर्गः सहसो यतो जनित्यादिश्रुतिपर्य्यालोचनयावगम्यत इति । तस्मात् सर्वस्य शास्त्रस्य विष्णुतत्त्वं सर्वोत्तममित्यत्र तात्पर्य्यमिति सर्वं निरवद्यम् ।

इति वेदान्तसिद्धन्त मार्त्तण्डे पूर्णप्रज्ञदर्शनम् ।

तदेतद्वैष्णवमतं दासत्वादिपदवेदनीयं परतन्त्रदुःखाव हत्वान्नदुःखान्तादीप्सितास्पदमित्यरोचयमानाः पारमैश्वर्य्यं कामयमानाः पराभिहता मुक्ता न भवन्ति परतन्त्रत्वात् पार-मैश्वर्य्यरहितत्वादस्मदादिवत् मुक्तात्मानश्च परमेश्वरगुणसम्ब-न्धिनः पुरषत्वे सति समस्तदुःखवीजविधुरत्वात् परमेश्वरवदि त्याद्यनुमानं प्रमाणं प्रतिपद्यमानाः केचन माहेश्वराः परमपुरुषार्थसाधनपञ्चार्थप्रपञ्चनपरं पाशुपतशास्त्रमाश्रयन्ते ।

इति श्रीमत्सर्वतंत्रस्वतंत्रविद्यावाचस्पतिदेवराज
पं० देवदत्तशर्माविरचिते वेदान्तसिद्धांतमत-
मार्तण्डे सर्वमतसंग्रहाभिधस्तृतीयः पादः
समाप्तः ॥

—o—

* श्रीहरिः *

# * अज्ञान तिमिरभास्करः *

विद्यावाचस्पतिपदोपलक्षित श्रीयुत देवदत्त शर्मविद्वद्वरोपस्थानेन
श्रीवैष्णव चतुस्सम्प्रदायविद्वन्महा सभापूर्वाद्रि समुदितः
सचउक्त सभाद्वारा प्रकाशितः इदानीं संशोध्य पुनः प्रकाश्यते ।

यमुनाकुञ्जनिर्लीनो लसतु नवीनो नु नीरदश्यामः ।
ताडिदम्बरम्बसानो नृत्यति केकीयमुद्वीक्ष्य ॥ १ ॥

निगमागमसारासारहेयोपादेयडिम्भानाम्पंडितम्मन्यमानानां चतुः सम्प्रदायिवैष्णवाचार्य्यवर्य्य-वाक्यमश्रद्दधानानामातितिमिर-तिरस्काराय भास्कर उदयते। तत्र वाक्यमस्ति नास्ति-इतिनास्माकमाग्रहः,तस्य तस्य वाक्यस्य कालेन नियमनात्,एतेन शिष्टाचारपरिगृहीतो लोक इति सिद्धः। महाजनो येन गतः स पन्था-इति लोकसिद्धस्य कार्यस्य श्रुतिमूलमिति सर्वत्र सिद्धम्,यथा होलाकाधिकरणं शिष्टपरिगृहीतत्वात मीमांसायाम् सुप्रसिद्धम्। धर्मशास्त्रे वीरमित्रोदयादावधिकृतश्च। एतेन प्रस्थानत्रयानिबन्धभाष्यकर्तृ वैष्णवाचार्यचतुष्टयं श्रुतिस्मृति[illegible]राणानुगृहीतम्,अलौकिकावगीत शिष्टानुमतत्वात् यदीदृशम् तदीदृशम् यथा मङ्गलादि।एतेन प्रत्यक्षमपि उक्तमतचतुष्टयं तर्कानुकूलमिति चतुरस्रम्।अथवा तुष्यतुदुर्जन

इति न्यायात् सवर्ग्यगर्गादिवाक्यानि संप्रति संदर्श्यन्ते। गर्गसंहिताध्यायेऽश्वमेधखण्डे एकषष्टितमेऽध्याये—

विष्णुस्वामी वामनांशः तथा मध्वस्तु ब्रह्मणः।
रामानुजस्तु शेषांशो निम्बार्कः सनकस्यच ॥ १ ॥

एते कलौयुगे भाव्याः संप्रदायप्रवर्तकाः। संवत्सरे विक्रमस्य चत्वारः क्षितिपावनाः ॥२॥ एतेन वैष्णवसंप्रदायप्रवर्तका उक्ताचार्याः चत्वार एव, अन्येतु तदन्तर्गता एव प्रतीयन्ते यथा विष्णुस्वामिसंप्रदायान्तर्गताः श्रीवल्लभाचार्याः। आचार्य्यवान् पुरुषो वेद। इति श्रुतेः ॥

संप्रदायविहीना ये ते मन्त्रा निष्फला मताः—इतिसिद्धम्। यस्य देवे पराभक्तिः यथा देवे तथा गुरौ ॥

तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ १ ॥

इत्यपि श्रुतिरुपष्टाम्भिकास्माकम्।

एतेन उक्ताचार्यप्रवर्तिताः चत्वार एव संप्रदायाः, ये चैतद्व्यतिरिक्तस्वसंप्रदायाभिमानिनस्तेषामपि एष्वेवान्तर्भाव आवश्यकः, अन्यथा तेषां वैष्णवत्वव्याघातापत्तेः।

श्रीशेषावतारस्य पूज्यपाद श्री १०८ श्रीमद्रामानुजाचार्यस्य शिष्टपरिगृहीतं विशिष्टाद्वैतमतं सुविदितमेवासीत्। तथा चेदानीं द्वैताद्वैतम्मतं द्वितीयसुदर्शनावतारस्य पूज्यपाद श्री १०८ श्रीनिम्बार्काचार्यस्य प्रतिजनं जगति प्रख्यातिमधिगतमेव, तद्वदद्वैतमपि-मतं पूर्णप्रज्ञाभिधेयस्य पवमानावतारस्य पूज्यपाद श्री १०८ श्रीम-

ध्वाचार्यस्य सुप्रसिद्धमेव, एवमेव तेजस्त्रितयावतारस्य पूज्यपाद श्री १०८श्रीवल्लभाचार्यस्य शुद्धाद्वैतमपिमतं जगत्यामतीव जागरूकतरमासीदेवेति च चतुर्वर्गसर्गप्रसूरासमुद्रं राजवीथीव वैष्णवचतुः संप्रदायी संप्रति संप्रचरति,यत्र च स्वयमेव पुनः पुनः भारती क्रमेण चतुर्धात्मानं विभज्य भक्तिभावभरं बिभ्राणोक्तदैशिकाचार्य्यवर्य्यमुखकञ्जमरन्दामोदाश्रुतिस्मृतीतिहासादिसागराणाम् हृदयगमा स्वच्छशुद्धामृतजीवानासारैर्गजर्ज्जीमूतमूर्तिरिवापि मधुरालापास्वा भिन्नाश्चापि भिन्ना इव प्रतीयमानाश्चावसरेऽवसरे जगदाप्लावयामास

( अत्राभणितिरियम् )

अयि या हरिभक्तसंचरद्रदनान्तारदनच्छदच्छविः ।
तरुपल्लवनीरविन्दुजा सुषमासाध्याधिरोहति क्षितौ ॥१॥
स्तुवतो भुवनैकसुन्दरम् रुचिरार्थाचतुराननस्य सा ।
मुखतो ववृते चतुष्टयान्मुखतो वापिगिरां चतुष्टयी॥इतिच॥२॥

अत्र सम्प्रदायपञ्चममाशंकमानं श्रीराधावल्लभीस्वामिनामधेयं सर्वत उत्कृष्टंमन्यं पूर्वाचार्यावमानिनं प्रत्याचक्ष्महे ॥

यथा चत्वारो वेदाः साङ्गाः सरहस्या वहुधाभिन्नाः एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः एकविंशतिधा वह्वृचम् नवधा अथर्वणोवेदः, एतेच शब्दब्रह्मात्मानो अवान्तरभेदमापन्ना अपि चतुःसंख्यां परम्परागतां नातिवर्तन्ते । यथा च परमेश्वरस्य चत्वारो भुजाः यथाचार्थधर्मकाममोक्षाः । आयुधान्यपि चत्वार्येव शंख-चक्र-गदा-पद्मानि नन्दकशार्ङ्गादीनि तु पृथगपितदन्तर्गतान्येव तेन । भवन्तो राधावल्लभसम्प्र-

दायं पृथक् मन्यमानाः धन्यंमन्या अत्रभवन्तोभवन्तः समाहिता भवन्तु प्राप्ताभ्युदयेषु भवत्सु नास्माकमाग्रहः किन्तु किंवदन्त्या समुद्रं चुलुकायिष्यन्तः फूत्कारेण लोकालोकं पातयिष्यन्तः संप्रति सावधानतया समाकर्णयन्तु जैपुरराजधानीकिंवदन्ती प्रवन्धविमुद्रापणेन आत्मोत्कर्षः प्रकाशितः तमवलोक्यैवोद्यतेऽस्माभिः सा किंवदन्ती भवता साक्षात् दृष्टा वा श्रुता वा, अन्यैरपिदृष्टा वा श्रुता नेति वा भवदनुकूला सा किंवदन्ती तामितरे भवत्प्रतिकूलां परिवर्णयन्ति, इत्थं च लक्षणप्रमाणाभ्यां प्रमेयसिद्धिस्तावल्लक्षणमेव दूषणचक्रनक्रमुखान्निस्तरितुमशक्नुवत्प्रमाणासिद्धौ प्रमेयवराकीनां किंवदन्त्यादीनां देशकालतोविरुद्धानां कथा तु तपस्विनी रुदन्तीव सुदूरतो निरस्ता मानपत्रादीनां तु बन्ध्यापुत्रवत प्रत्याशासुदूरतोनिरस्तैव वोद्धव्या। ननु कथनादेव कथा भवति सैव किंवदन्तीति कथन्न प्रमाणपदमारूढा स्यादिति चेन्न लोकतः प्रमाणतो वा तां साधयितुमिच्छसि, तत्र नाद्यः प्रत्यक्दृष्टस्यापि मरुमरीचिकादेः सत्यत्वेन लोकसिद्धत्वं भविष्यति, तथा श्रुताश्चापि शशशृङ्गकूर्मक्षीरबन्ध्यापुत्रखपुष्पादयोऽपि सिद्धाः सन्तः प्रमाणभाजोभवन्नये भविष्यन्तीति। नापि द्वितीयः किंवदन्तीतरप्रमाणं भवद्भिः स्वपत्रे नोपन्यस्तम् अतो न्यूनत्वमपि दूषणं, न प्रतिज्ञामात्रेण भवदभीष्टसिद्धिर्भविष्यति किंवदन्त्यादौ सच्छक्तिग्रहाभावात्, श्रुतिशक्तिग्रहाभावव्याकोपश्चापतेत् श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः, इत्यादिशास्त्रशासनानां विरोधोत्पातकेतुरुदयेत, अतो निगमागमसारभृत्तयैव गुरूणां गुरुता, सा च

व्याकुप्यन्ती गुरोश्चालीकनिर्बन्ध इति ब्रह्महत्यापराधं बोधयन्ती भवत्पातित्यं प्रकाशयतिस्म तथाहि मनु० अ० ११ श्लोक ३५ तस्मै न कुशलं ब्रूयान्न शुष्काङ्गिरमीरयेत । तस्मिन्नेवाध्याये श्लोक ५६ अनृतं च समुत्कर्षे राजगामी च पैशुनम् ॥ गुरोश्चालीकानिर्बन्धः समोहि ब्रह्महत्यया ॥१॥ अनृतं मिथ्या समुत्कर्षे स्वाभिजात्यप्रकाशे राजगामी पैशुनन्तु सूचकत्वेन परस्य जीविकाप्राणादिहरणम् ॥ २ ॥ गुरोरलीकनिर्बन्धो नाम गुरौ दोषारोपणम् ३ । एतदुक्तत्रयं ब्रह्महत्यातुल्यम् । एवञ्च उक्तत्रयमपि भवत्सु दोषचतुष्टयं जातम्, तथा ब्राह्मणानामपमानम् ? गुरोरलीकनिर्बन्धः २ स्वाभिजात्यप्रकाशे अनृतम् ३ परावमानेन जीविकाहरणादिमनोरथोऽपि ४ एतच्चतुष्टयमहापातकव्यूहेन भवतां पातित्यं संबोधितम् । अतो वैष्णवचतुः संप्रदायिजनताभिर्हेया भवन्तो भोजनपानादौ । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह–इति मनूक्तेः दिगेषा दर्शिता सम्यक् प्राचामाचारचर्चिता पदमस्या पृथक् दास्यश्चास्यं यास्यति मूकताम् ॥१॥

नन्वस्तु वा पञ्चमसम्प्रदाय इति भवतां कथं ज्ञातः कस्माद्दैशिकात्कास्मिन् काले स च सम्प्रदायः, वेदवेदाङ्गसहचरो वेतरो वा, आद्यश्चेन्मूलं गवेष्य नोक्तमिति. नान्त्योऽसहचरश्चेत किंवदन्तीसहचर इति भवद्भिरेवोह्यताम्, किंवदन्तीप्रमाणेन यादृशी प्रमेयसिद्धिरिति दैशिकविश्राममन्तराऽनवस्थापातश्च भवन्नये स्यात । आप्तवाक्यमन्तरा को भवानिति आत्मानं निरूपयितुमप्यशक्तो भवान् आप्तदैशिकमन्तरा जनकज्ञानमपि

साकांक्ष्यमिति, यथा श्रीमद्रामादीनां महाप्रभुत्वेऽपि राघववंश्यत्वं जनो ब्रूते, तद्वद् भवतोऽपि संप्रदायान्तर्गतत्वे को वा मत्सरः।

एतेन श्रीमदुक्ताचार्यदैवतविनिर्मिता एवं सम्प्रदायाः वैष्णवानां चत्वार एव भवितुमर्हन्ति । तथाहि–

कैलासो नु हिमालयो नु लहरी क्षीरोदपूरोत्थिति–
मैनाको बड़वानलो नु तरुणो ग्रीष्मस्य भीष्मातपः ॥ १ ॥
इत्थं कीर्तिमहौजसोः समुदये यत्रैवमाशङ्क्यते,
कोन्यो भक्तशिरोवधार्यचरणस्तां स्पर्धते दैशिकः ॥ २ ॥
मत्ताद्रिवारणनिवारणविक्रमेभ्यः
श्वेवास्रपाठलनखाग्रमहाशनिभ्यः ।
निद्रामिषेण परिमीलितलोचनेभ्यः,
हर्तुं हरिभ्य इह वाञ्छति कोऽभिमुक्तः ॥ २ ॥

विरम्यतेऽस्माभिः सम्प्राति सर्वदैशिकदासानुदासैर्देवदत्तशर्म्मभिः ।

श्रीहरिः

श्री वैष्णव चतुः संप्रदाय महासभा का जो प्रथमाधिवेशन हुआ था । उस में जो पं० श्रीमान् देवदत्त शास्त्री विद्यावाचस्पति महाशय का "भक्तिभाव विजय" पोथी के विषयमें आलोचन और अभिमत हुआ था । इस में हम सब निम्नलिखित स्वाक्षरकारी परम सहमत हैं ॥

**माध्व संप्रदायानुयायिनाम् ॥**

मधुसुदन गोस्वामी ( माध्व गौडेश्वराचार्य )

आचार्य मदनमोहन गोस्वामी।
विजय कृष्ण गोस्वामी।
अनन्तलाल गोस्वामी।
वालकृष्ण गोस्वामी।
रामचन्द्र गोस्वामी।
वालकृष्ण गोस्वामी मुखिया।
माधव गोस्वामी।
पं० आशाराम शास्त्री प्रेमसरो०वरसा०
व्या. ती. ललित मोहन भट्टाचार्यः। व्या. ती. जगदानन्ददास।

अध्यापक वैष्णव विद्यालय बृन्दावन।

**श्रीनिम्बार्कसम्प्रदायानुयायिनाम्॥**

गोस्वामी छबीलेलाल।
पं० किशोरदास।
गो० पं० केशवलाल शर्म्मा जम्बू वाले।
गो० नीलाम्बर शरण देवाचार्यः।
पं० अमोलकराम शास्त्री तर्कतीर्थ।
पं० दुलारे प्रसाद शास्त्री।
महन्त कल्याण दास जी।
पं० गणपति शास्त्री ( तर्कतीर्थ न्यायाचार्य )

**श्रीरामानुजसम्प्रदायानुयायिनाम्॥**

श्री रङ्गाचार्य ( गोवर्धनपीठाधिपति श्रीरङ्गमंदिराध्यक्ष )

स्वामी रामप्रपन्नाचार्य शास्त्री ।
पं० श्रीधराचार्य वेदान्ततीर्थ ।
„ सीताराम शास्त्री व्याकरणाचार्य ।
„ गरुडध्वजाचार्य तर्कतीर्थ ।
महन्त भागवतदास जी ।
पं० गोबिन्दाचारी सां० वे० तीर्थ, व्या० आ०
महन्त गजेन्द्ररामानुजदास खपाटिया ।
पण्डित सीताराम शास्त्री बड़ी कुञ्ज ।
पण्डित दाऊदयाल शास्त्री ।
पण्डित रामगोपालशुक्ल ।
पण्डित माधवाचार्य श्री रङ्ग विद्यालय बृन्दावन ।

**श्रीविष्णुस्वामिसंप्रदायानुयायिनाम् ॥**

गोस्वामी लक्ष्मणाचार्य ।
कृष्णवल्लभ शर्मा ।
पं० गिरधर भट्टजी भक्तितीर्थ ।
भट्ट मदन मोहन शर्मा ।
भट्ट सोहनलाल शर्म्मा ।
पं० पुरुषोत्तमभट्ट ।
शास्त्री सोहनलाल भट्ट ।
पं० रामकुमार शर्मा ।
पं० दाऊदयाल शर्मा ।
मुखियाजी गोपाल । इति

# अथ वेदान्तसिद्धान्तमार्तण्डे चतुर्थपाद

## विषयानुक्रमणिका ।

इति चतुर्थपादविषयानुक्रमणिका।

## अथ वेदान्तसिद्धान्तमार्त्तण्डे

सर्वतंत्रस्वतंत्रविद्यावाचस्पति देवराज पं० देवदत्तशर्मविरचिते

# * उपासनाख्यश्चतुर्थपादः *

## प्रारभ्यते

श्रीगणेशायनमः अथ प्रपंचसारोक्ताः केचन मंत्राः ॥ तत्रादौ गणपतिमंत्रः ॥

अथ संग्रहेण कथयामि मनुमपि महा गणेशितुः । यमवहित-धियः समुपास्य सिद्धिमधिकांप्रपेदिरे ॥ १ ॥

तारश्रीशक्तिमारावनिगणपतिबीजानि दण्डीनि चोक्त्वा । पश्चाद्विघ्नं चतुर्थ्या वरवरदमथो सर्वयुक्तं जनं च ॥ आभाष्य क्ष्वेलमेन्तं वशमिति च तथैवानयेति द्विठान्तः । प्रोक्तोऽयं गाणपत्यो मनुरखिलविभूतिप्रदः कल्पशाखी ॥ २ ॥

ऋषिरपि गणकोऽस्य स्याच्छन्दो निचृदन्विता च गायत्री सकलसुरासुरवन्दितचरणयुगो देवता महागणपः ॥ ३ ॥

प्रणवादिबीजपीठस्थितेन दीर्घस्वरान्वितेन सता । अङ्गानि षड्विदध्यान्मंत्री विघ्नेश्वरस्य बीजेन ॥ ४ ॥

मन्दाराद्यैः कल्पकवृक्षविशेषैर्विशिष्टतरफलदैः शिशिरित चतुराशेऽन्तर्बालातपचान्द्रिकाकुले च तले ॥ ५ ॥

ऐक्षवजलनिधिलहरीकणजालकवाहिना च गन्धवहेन संसोविते च सुरतरुसुमनःश्रितमधुपपक्षचलनपरेण ॥ ६ ॥

रत्नमयेमणिवज्रप्रवालफलपुष्पपल्लवस्य सतः महतोऽधस्तादृतुभिर्युगपत्संसोवितस्य कल्पतरोः ॥ ७ ॥

सिंहमुखपादपीठगलिपिमयपद्मे त्रिषट्कोणोल्लसिते आसीनस्त्वेकरदो बृहदुदरो दशभुजोरुणतनुश्च गजवदनः ॥ ८ ॥

बीजापूरगदेक्षुकार्मुकरुजाचक्राब्जपाशोत्पलव्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः ॥ ध्येयो वल्लभया सपद्मकरयाऽऽश्लिष्टोज्ज्वलद्भूषया विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नो विशिष्टार्थदः॥९॥

करपुष्करधृतकलशस्रुतमणिमुक्ताप्रवालवर्षेण अविरतधारां विकिरन्परितः साधकसमग्रसंपत्त्यै ॥ १० ॥

मदजललोलुपमधुकरमालां निजकर्णतालताडनया निर्वासयन्मुहुर्मुहुरमरैरसुरैश्च सेवितोयुगपत ॥ ११ ॥

अग्रेऽथ विल्वमभितश्च रमारमेशौ तद्दक्षिणे वटजुषौ गिरिजावृषाङ्कौ पृष्ठेऽथ पिप्पलजुषौ रतिपुष्पवाणौ सव्ये प्रियङ्गुमभितश्च महीवराहौ ॥ १२ ॥

ध्येयौ च पद्मयुगचक्रदरैः पुरोक्तौ पाशाङ्कुशाख्यपरशुत्रिशिखैरथान्यौ युग्मोत्पलेक्षुमयचापधरौ तृतीयावन्यौ शुकाढ्यकलमाग्रगदारथाङ्गैः ॥ १३ ॥

ध्येयाः षट्कोणाश्रिषु परितः पाशाङ्कुशाभयेष्टकराः सप्रमदा गणपतयो रक्ताकाराः प्रभिन्नमदविवशाः ॥ १४ ॥

अग्राश्रावामोदः प्रमोदसुमुखौ च तदभितोऽश्रियुगे पृष्ठे च दुर्मुखाख्यस्त्वमुमभितो विघ्नविघ्नकर्तारौ ॥ १५ ॥

सव्यापसव्यभागे तस्य ध्येयौ च शङ्खपद्मनिधी मौक्तिकमाणिक्याभौ वर्षन्तौ धारया धनानि सदा ॥ १६ ॥

सिद्धिसमृद्धी चान्या कान्तिर्मदनावती मदद्रवया द्राविणिवसुधाराख्ये वसुमत्यपि विघ्ननिधियुगप्रमदाः ॥ १७ ॥

ध्यात्वैवं विघ्नपतिं चत्वारिंशत्सहस्रसंयुक्तम् । प्रजपेल्लक्षचतुष्कं चतुःसहस्रं च दीक्षितो मंत्री ॥ १८ ॥

दिनशः स चतुश्चत्वारिंशत्संख्यं प्रतर्पयेद्विघ्नं उक्तजपान्ते मंत्री जुहुयाच्च दशांशतोऽष्टभिर्द्रव्यैः ॥ १९ ॥

मोदकपृथुका लाजाः ससक्तवः सेक्षुनालिकेरतिलाः कदली-

फलसहितानीत्यष्टद्रव्याणि संप्रदिष्टानि ॥ २० ॥

अनुदिनमर्चयितव्यो जपता मनुमपि च मंत्रिणा गणपः प्राक्प्रोक्तपद्मपीठे सशक्तिके साधिकामनो विधिना ॥ २१ ॥

तीव्रा ज्वालिनिनंदे सभोगदा कामरूपिणी चोग्रा तेजोवती च नित्या संप्रोक्ता विघ्ननाशिनी नवमी ॥ २२ ॥

सर्वयुतं शक्तिपदं प्रोक्त्वा कमलासनाय नम इति च आसनमंत्रः प्रोक्तो नवशक्त्यंते समर्चयेदमुना ॥ २३ ॥

आद्या मिथुनैरावृतिरपरा स निधिभिरपिच षड्विघ्नैः अङ्गैरन्या मातृभि रपरेन्द्राद्यैश्च पंचमी पूज्या ॥ २४ ॥

दीक्षाभिषेकयुक्तः प्रजपेत्संपूजयेदिति गणेशम् अभिधी- यतेऽस्य च पुनर्गुर्वादेशेन मंत्रिणो दीक्षा ॥ २५ ॥

मध्ये च दिग्दलानां चतुष्टयाग्रे प्रविन्यसेत्कलशान् क्षीरद्रुविल्वरोहिणपिप्पलफलिनीत्वगुद्भवैः क्वथितैः ॥ २६ ॥

संपूजयेद्यथावत्क्रमात्समावाह्य गणपमिथुनानि अभ्यर्च्य चोपचारै र्हुत्वा विधिवत्पुनः समाभिषिञ्चेत ॥ २७ ॥

इति जपहुतार्चनाद्यैः सिद्धो मंत्रेण कर्मकुर्वीत अष्टद्रव्यैर्वान्यै र्हुनेच्च तत्तत्प्रयोजनावाप्त्यै ॥ २८ ॥

स्वर्णाप्त्यै मधुना च गव्यपयसा गोसिद्धये सर्पिषा लक्ष्म्यै शर्करया जुहोतु यशसे दध्नाच सर्वर्द्धये । अन्नैरन्नसमृद्धये च सतिलैर्द्रव्याप्तये तण्डुलैर्लाजाभिर्यशसे कुसुम्भकुसुमैः साश्वारिजैर्वाससे ॥ २९ ॥

पद्मै भूपतिमुत्पलैर्नृपवधूं तन्मंत्रिणः कैरवै रश्वत्थादिसमिद्भिरग्रजमुखान्वर्णान्वधूः पिष्टजैः । पुत्तल्यादिभिरन्वहं च वशयेज्जुहनावृष्टये लोणैर्वृष्टिसमृद्धये च जुहुयान्मंत्री पुनर्वेतसैः ॥३०॥

मंत्रेणाथ पुरामुनैव चतुरावृत्या समातर्प्य च श्रीशक्तिस्मरभूविनायककरतीर्नाम्नैव बीजादिकम् । आमोदादिनिधिद्वयं च सचतुःपूर्वं चतुर्वारकं मंत्री तर्पणतत्परोऽभिलषितं संप्राप्नुयान्मंडलात् ॥ ३१ ॥

अथ गजलिप्सुर्नृपतिर्गजवनमध्ये प्रसाधयेद्धारि तन्निकटे तु विशालं चतुरश्रं कारयेच्च गृहवर्यम् ॥ ३२ ॥

परिपातदृढ [illegible]रणं तच्च च[illegible]द्वारतोरणोल्लासितम् । तस्मिन्मण्डपवर्ये चतुरश्रामुन्नतां स्थलीं कृत्वा ॥ ३३ ॥

उत्तरभागे तस्याः कुण्डं रचयेद्यथापुरा तत्र चापजहरिभव-
मानुषचक्रप्रोक्तानथाक्षरान्मंत्री ॥ ३४ ॥

ऊर्ध्वादिमेखलासुक्रमेण विलिखेन्निजेष्टसमवाप्त्यै संप्रोक्त-
लक्षणयुतं प्रविरचयेन्मण्डलं स्थलीमध्ये ॥ ३५ ॥

आवाह्य विघ्नेश्वरमर्चयित्वा प्रागुक्तया तत्र विधानक्लृप्त्या ।
निवेदयित्वा सह भक्ष्यलेह्यैः प्राज्यैश्च साज्यैरपि भोज्यजातैः॥२६॥

आधाय वैश्वानरमत्रकुंडे समर्च्य मंत्रैः क्रमशः कृशानोः
तैरेवपूर्वं जुहुयाद्घृतेन मंत्री समृद्ध्या च ततस्त्रिवारं ॥ ३७ ॥

तारेण लक्ष्म्यद्रिसुतास्मरक्ष्माविघ्नेशबीजैः क्रमशोऽनुबद्धैः ।
पदत्रयेणापि च मंत्रराजं विभज्य मंत्री नवधाजुहोतु ॥ ३८ ॥

पुनः समस्तेन च मंत्रवर्णसंख्यं प्रजुह्वन्नपि सर्पिषैव पूर्व-
प्रदिष्टैर्जुहुयादथाष्टद्रव्यैः प्रसिक्तैर्मधुरत्रयेण ॥ ३९ ॥

सचतुश्चत्वारिंशत्सहस्रसंख्यैश्चतुःशतैः श्रुतिभिः दशकचतु-
ष्कैर्हुत्वा चत्वारिंशद्भिरन्तरेण दिनैः ॥ ४० ॥

करिकलभाः करिणीभिः संपात्यन्ते वटेऽत्रगणपतिना
प्रतिदिनमभ्यवहार्यं च विप्रान्सं र्पितस्तदाशीर्भिः ॥ ४१ ॥

तेषां मातङ्गानां दद्यात्पंचाशद्दक्षिणां गुरवे तद्विक्रीतं वसु वा प्रसादितायाथ तद्दशांशं वा ॥ ४२ ॥

मिथुनानां गणपानां निध्योश्च तथाङ्गमातृलोकेशानाम् । मंत्री घृतेन हुत्वाभ्यर्च्य च होमं समापयेत्सम्यक् ॥ ४३ ॥

पुनरुद्धृत्य निवेद्यादिकं समभ्यर्च्य गणपतिं सावरणम् । उद्वास्य स्वे हृदये विहरेदित्यर्चना क्रमोद्दिष्टा ॥ ४४ ॥

प्रोक्तस्त्वेवं दशभुजमनुः संग्रहेणात्रभक्तो दीक्षां प्राप्तो विधिवदभिजप्त्वाथहुत्वार्चयित्वा । नुत्वा नत्वा दिनमनु तथा तर्पयित्वा स्वकामांल्लब्धा चान्ते व्रजति मुनिभिः प्रार्थनीयं पदं तत ॥ ४५ ॥

## अथ स्वरूपादिकम् ।

ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा । अस्य श्रीमहागणपतिमंत्रस्य गणकऋषिः निचृद्गायत्रीछन्दः श्रीमहागणपतिर्देवता अखिलाप्तये जपे विनियोगः । शिरसि गणकऋषये नमः । मुखेनिचृद्गायत्रीछंदसे नमः । हृदि श्रीमहागणपतिदेवतायै नमः ॥ ॐ गां अंगुष्ठाभ्यांनमः । श्रीं गींतर्जनीभ्यांनमः । ह्रीं गूंमध्यमाभ्यांनमः । क्लीं गैं अनामिका-

भ्यांनमः । ग्लौं गौं कनिष्ठकाभ्यांनमः । गं गः करतलकरपृष्ठा-
भ्यांनमः ॥ ॐ गां हृदयायनमः । श्रीं गीं शिरसे स्वाहा ।
ह्रीं गूं शिखायै वषट् । क्लीं गैं कवचायहुं । ग्लौं गौं नेत्रत्रयायवौषट्
गंगः अस्त्रायफट् । एवंन्यासान्कृत्वा 'मन्दाराद्यैःकल्पकवृक्ष
विशेषैर्विशिष्टतरफलदैरित्यारभ्य वसुमत्यपिविघ्ननिधियुगप्रमदाः"
इत्यन्तंध्यात्वाचतुश्चत्वारिंशत्सहस्रयुक्तंचतुर्लक्षम् जपेत् मोदका-
द्यष्टद्रव्यैःदशांशं हवनंकुर्यात् ततो स्वपरेष्टार्थे प्रयोगाना चरेत् ॥

## अथ महालक्ष्मीमंत्रविधानम् ।

तारमामायाश्रीः कमले कमलालये प्रसीदयुगम् । वीजानि
तानि पुनरपि समहालक्ष्मीहृदिन्दिरामंत्रः ॥ १ ॥

त्रिभिस्तुवर्णैर्हृदयं शिरोभिः स्यात्पंचभिश्चाथ शिखात्रिवर्णा
त्रिभिस्तथा वर्म चतुर्भिरस्त्रं पृथक् त्रिबिजापुटितैस्तदङ्गम् ॥२॥

हस्तोद्यद्वसुपात्रपंकजयुगादर्शा स्फुरन्नूपुरग्रैवेयाङ्गदहारकङ्क-
णमहामौलिज्वलत्कुंडला पद्मस्था परिचारिकापरिवृता शुक्लाङ्ग
रागांशुका देवी दिव्यगणानता भवदघप्रध्वंसिनी स्याद्रमा ॥३॥

लक्षं जपेन्मनुमिमं मधुरत्रयाक्तैर्बैल्वैः फलैः प्रतिहुनेदयुतं

तदन्ते। आराधयेदनुदिनं प्रतिवक्ष्यमाणमार्गेण दुर्गतिभयाद्रहितो भवेत्सः ॥ ४ ॥

श्रीधरश्च हृषीकेशो वैकुण्ठो विश्वरूपकः ॥ वासुदेवादयश्चाङ्गावरणात्समनन्तरम् । ५ ।

भारतीपार्व...शचीभिरपि संयुता । दमकादिस्तृतीयानुरागाद्यैश्च चतुर्थ्यपि । ६ ।

अनुरागो विसम्वादो विजयो वल्लभो मदः । हर्षो वलश्च तेजश्चेत्यष्टौ बाणा महाश्रियः । ७ ।

अनन्तब्रह्मपर्यन्तैः पंचमीन्द्रादिभिर्मता । चक्रपद्मान्तिकैः षष्ठीवज्राद्यैरावृतिः श्रियः । ८ ।

संपूज्यैवं श्रियमनुदिनं योजपेन्मंत्रमेनं प्रोक्तां संख्यां सहुतविधिमप्युच्छ्रितां प्राप्यलक्ष्मीम् । द्वित्रादर्वाग्भवति पशुपुत्रादिभोगैः समृद्धो वर्षाद्देहापदि च पदमभ्येति नित्यं स विष्णोः ॥ ९ ॥

ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं महालक्ष्म्यैनमः

ओं अस्य श्रीमहालक्ष्मीमंत्रस्य दक्षऋषिर्विराट्छंदः श्रीमहालक्ष्मीदेवता इष्टार्थेजपेविनियोगः ।। ऋष्यादिन्यासं पूर्ववत्कृत्वा।। श्रीं ह्रीं श्रीं कमले श्रीं ह्रीं श्रीं अंगुष्टाभ्यां नमः ।। श्रीं ह्रीं श्रीं कमलालये श्रीं ह्रीं श्रीं तर्जनीभ्यां नमः ।। श्रीं ह्रीं श्रीं प्रसीद श्रीं ह्रीं श्रीं मध्यमाभ्यां नमः ।। श्रीं ह्रीं श्रीं प्रसीद श्रीं ह्रीं श्रीं अनामिकाभ्यां नमः ।। श्रीं ह्रीं श्रीं महालक्ष्म्यै श्रीं ह्रीं श्रीं करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासं कृत्वा "हस्तोद्यद्वसुपात्रेत्यारभ्य स्याद्रमा"इत्यंतं श्लोकोक्तरूपं ध्यात्वा पीठे विभूतिरुन्नतिः कांतिर्हृष्टिः कीर्तिश्च संनतिः । पुष्टिराकृष्टिर्ऋद्धिश्च रमाया नवशक्तयः।।पूर्वमङ्गानि ततोऽष्टदलमूलेषु श्रीधरं-हृषीकेशं-वैकुण्ठं-विश्वरूपकं—वासुदेवं--संकर्षणं--प्रद्युम्नं--अनिरुद्धम्-- दलमध्येषु--भारतीं--पार्वतीं—चान्द्रीं--शचीं—दमकं—शललं-गुग्गुलुं-कुरण्टकं.। दलाग्रेषु अनुरागं—विसंवादं—विजयं—वल्लभं--मदं—हर्षं-वलं—तेज—इति तद्बहिरिन्द्रादीन् ततो वज्रादीन् एवं षष्ठावरणमत्रशंकरमते लक्षजपः बिल्वफलैर्मधुरत्रयाक्तैः होमः एवं पूजनादिनात्रधनादिसमृद्धिः स्यादंते च विष्णुपदम् प्राप्नुयात् ।।

( अथ सौराष्टाक्षरमंत्रविधानम् )

त्यद्यन्तआर्यसूर्यर्णा मेधारे[illegible] गुणः । व्यत्ययोऽष्टाक्षरः प्रोक्तः सौरः सर्वार्थसाधकः ।। १ ।।

देवभागश्चर्षिः प्रोक्तो गायत्रीच्छन्द उच्यते । आदित्यो देवता चास्य कथ्यन्तेऽङ्गान्यतो मनोः ॥ २ ॥

सत्यब्रह्माविष्णुरुद्रैः साग्निभिः सर्वसंयुतैः तेजोज्वालामणिं हुंफट्स्वाहान्तैरङ्गमाचरेत् ॥ ३ ॥

आदित्यं रविभानू भास्करसूर्यौ न्यसेत्स्वरैर्लघुभिः सशिरोमुखहृद्गुह्यकचरणेषु क्रमश एव मंत्रितमः ॥ ४ ॥

सशिरोमुखगलहृदयोदरनाभिशिवांघ्रिषु प्रविन्यस्येत् प्रणवाद्यैरष्टार्णैः क्रमेण सोऽयं तदक्षरन्यासः ॥ ५ ॥

अरुणोरुणपंकजे निषण्णः कमलेभीतिवरौ करैर्दधानः । स्वरुचाहितमण्डलस्त्रिनेत्रो रविराकल्पशताकुलोवताद्वः ॥६॥

संदीक्षितस्तु मंत्री मंत्रं प्रजपेत्तु वर्णलक्षं तम् । जुहुयात्त्रिमधुरसिक्तैर्दुग्धतरुसमिद्वरैर्वसुसहस्रम् ॥ ७ ॥

अथवा सघृतैरन्नैः समर्चयेन्नित्यशोऽर्घ्यमपि दद्यात् पूर्वोक्त एव पीठे कुम्भंप्रणिधाय साधुसंपूर्य ॥ ८ ॥

शुद्धाद्भिररुणवासोयुगेन संवेष्ट्य पूजयेत्क्रमशः अङ्गावृतैः परस्तादादित्याद्यैरुषादिशक्तियुतैः ॥ ९ ॥

मातृभिररुणान्ताभिः ग्रहैः सुरैश्चान्तसूर्यपरिषाद्भिःसोषा सप्रज्ञा च प्रभा च संध्या च शक्तयः प्रोक्ताः ॥ १० ॥

सं‌ज्यैवं दिनेशं पटुमतिरथ जप्त्वा च हुत्वाभिषेकं कृत्वा दत्तेन संख्यां वसुमपिगुरवे सांशुकंभोजयेच्च । विप्रानादित्यसंख्यानिति-विदितमनु नित्यशोऽर्घ्यं च दद्यात द्वारे वा भास्करीये शुभतर-चरितो वल्लभाय ग्रहाणाम् ॥ ११ ॥

इतीह दिनकृन्मनु भजति नित्यशो भक्तिमान्यएष निचि-तेन्द्रिरो भवति नीरुजो वत्सरात समस्तदुरितापमृत्युरिपुभूत-पीड़ादिकानपास्य सुसुखी च जीवति परं च भूयात्पदम् ॥ १२ ॥

**मंत्रः ॐ घृणिः सूर्य आदित्यः ॥**

अस्यश्रीसूर्याष्टाक्षरमंत्रस्यदेवभागऋषिः गायत्रीछंदः आ-दित्योदेवता इष्टार्थेजपेविनियोगः ॥ ऋष्यादिन्यासं विधाय । सत्यायतेजोज्वालामणेहुं फट् स्वाहा अंगुष्टाभ्यांनमः॥ब्रह्मणे तेजो ज्वालामणे हुं फट् स्वाहा तर्जनीभ्यांनमः॥विष्णवे तेजो ज्वाला-मणे हुं फट् स्वाहा मध्यमाभ्यांनमः॥रुद्राय तेजो ज्वालामणे हुं फट् स्वाहा अनामिकाभ्यां हुं॥अग्नये तेजो ज्वालामणे हुं फट् स्वाहा कनिष्ठिकाभ्यां वौषट्॥सर्वाय तेजो ज्वालामणे हुं फट् स्वाहा

करतलकरपृष्ठाभ्यांनमः । एवं हृदयादिन्यासं कृत्वा । मूर्तिन्यासं कुर्यात् मंत्रन्यासः शिरसि ॐ नमः मुखे घृं नमः कंठेर्णिनमः हृदि सूं नमः उदरेर्य्येनमः नाभौ आं नमः लिङ्गे दिं नमः पादयोस्त्यं नमः । मूर्तिन्यासः । शिरसि ॐ आदित्यायनमः मुखे ए रवये नमः हृदये ॐ भानवे नमः गुह्ये ई भास्करायनमः चरणयोः अं सूर्याय नमः एवं न्यासंकृत्वापुनरक्षरन्यासंकर्तव्यम् ध्यानं अरुणोरुणपंकजेनिषण्णो कमलेभीतिवरौकरैर्दधानः । स्व रुचाहितमंडलस्त्रिनेत्रो रविराकल्पशताकुलोवताद्वः ॥ अष्टलक्ष जपः अष्टसहस्रं त्रिमधुयुक्तक्षीरवृक्षसमिधहोमः पूजादिकेमूले द्रष्टव्यम् रोगदारिद्रादिनाशकरोऽयंमंत्रः ॥

## ( अथ शिवप्रासादादिमंत्रविधानम् )

अथाभिधास्यामि मनुं समासात्प्रासादसंज्ञं जगतोहिताय ।
येन प्रजपेन तथार्चितेन हुतेन सिद्धिं लभते यथेष्टम् ॥ १ ॥

प्रसादनत्वान्मनसो ग्यात्प्रासादसंज्ञास्य मनोः प्रदिष्टा ।
अन्त्यातृतीयः प्रतिलोमतः स्यादनुग्रहार्धेन युतश्च मंत्रः ॥२॥

ऋषिरस्य वामदेवः पांक्तश्छन्दोऽस्य देवतेशः स्यात् । तेनेवाक्लीबकलाद्यैयुजाङ्गानि तस्य बीजेन ॥ ३ ॥

शूलाही टङ्कघण्टासिसृणिकुलिशपाशाग्न्यभीतीर्दधानं दोर्भिः शीतांशुखण्डप्रतिघटितजटाभारमौलिं त्रिनेत्रम् ॥ नानाकल्पाभिरामापघनमभिमतार्थप्रदं सुप्रसन्नं पद्मस्थं पञ्चवक्त्रं स्फटिकमणिनिभं पार्वतीशं नमामि ॥ ४ ॥

ईशानादीन्मंत्रवित्पंचमंत्रानङ्गुष्ठादिष्वङ्गुलीषु क्रमेण । न्यस्येदज्भिर्व्युत्क्रमाद्योमगाभिर्हस्वाख्याभिस्ताभिरेवाङ्गुलीभिः ॥५॥

ईशानस्तत्पुरुषोऽघोराख्यो वामदेवसंज्ञश्च । सद्योजाताह्वय इति मंत्राणां देवताः क्रमात्पञ्च ॥ ६ ॥

मूर्द्धाननहृद्गुह्यकपादेषु च नामभिः स्वबीजाद्यैः । ऊर्ध्वप्राग्दक्षोदक्पश्चिमगेष्वानने विन्यस्येत ॥ ७ ॥

प्रतिपाद्य निजंशरीरमेव प्रजपेदिन्द्रियलक्षकं नियतात्मा । जुहुयाच्च दशांशतस्तदन्ते मधुराक्तैः करवीरजप्रसूनैः ॥ ८ ॥

अथ वा कुसुमैर्जपासमुत्थैः कमलैर्वा विमलेन पायसेन नृपवृक्षभवैः समिद्वरैर्वा जुहुयात्साधकसत्तमः समृद्ध्यै ॥ ९ ॥

अष्टपत्रगुणवृत्तराशिभिर्वीथिकल्पतरुभिः समावृतम् । मण्डलं प्रतिविधाय शूलिनः पीठमत्र नवशक्तिभिर्यजेत ॥ १० ॥

वामाज्येष्ठारौद्री काल्या कलबलाद्यविकलिन्यौ । सबलप्रम-
थिनिसर्वभुतदमन्यौ मनोन्मनीं च यजेत ॥ ११ ॥

तारादिकं नतिमपि प्रोक्त्वा भगवत्पदं चतुर्थ्यन्तम् । सकल
गुणात्मपदान्ते शक्तियुक्ताय चेति संभाष्य ॥ १२ ॥

भूयोनन्तायेति च योगान्ते पीठमात्मने चेति नमसा युक्तं
ब्रूयात्पीठाख्योयं मनुः समुद्दिष्टः ॥ १३ ॥

न्यासक्रमेणदेहे मन्त्री गंधादिकमपि पूज्य पूर्वोक्तदिक्षु मूर्ती-
र्विदिक्षु सनिवृत्तिपूर्विकाश्च यजेत ॥ १४ ॥

सद्योवेदाक्षमालाभयवर करः कुन्दमन्दारगौरो वामः का-
श्मीरवर्णोऽभयवरदपरश्चाक्षमालाविलासी अक्षस्रग्वेदपाशाङ्कुशड-
मरुकखट्वाङ्गशूलान्कपालं बिभ्राणो भीमदंष्ट्रोञ्जनरुचिरतनुर्भी-
तिदश्चाप्यघोरः ॥ १५ ॥

विद्युद्वर्णोऽथवेदाभयवर -कुठारान्दधत्पुरुषाख्यः । प्रोक्ताः
सर्वे त्रिणेत्रा विधृत स्वचतुष्काश्चतुर्बाहवश्च । मुक्तागौरोभये-
ष्टाधिककरकमलोऽघोरतः पंचवक्त्रस्त्वीशो ध्येयोऽम्बुजन्मोद्भव-
मुररिपुरुद्रेश्वराः स्युः शिवान्ताः ॥ १६ ॥

भूतानां शक्तित्वाद्व्यापित्वाज्जगति वा निवृत्याद्याः तेजोरूपाः करपदवर्णविहीनाः मनीषिभिः प्रोक्ताः ॥ १७ ॥

अनन्तसूक्ष्मौ च शिवोत्तमश्च तथैकपूर्वावपि नेत्ररुद्रौ त्रिमूर्तिश्रीकंठशिखण्डिनश्च प्रागादिपत्रेषु समर्चनीयाः ॥१८॥

शूलाशनिशरचापोल्लासितदोर्दण्डभीषणाः सर्वे पद्मासनाश्च नानाविधिभूषणभूषितास्त्रिणेत्राः स्युः ॥ १९ ॥

पाटलपीतसिता [illegible] प्रभाश्च धूम्रान्ताः कोटीर-घटितविलसच्छां [illegible]शकलयुताश्चमूर्तयः क्रमशः ॥ २० ॥

उमा चण्डेश्वरो नन्दी म[illegible]कालो गणेश्वरः वृषोभृङ्गरिटः स्कन्दः संपूज्याश्चोत्तरादितः ॥ २१ ॥

कनकविडूरजविद्रुममरकतमुक्तासिताच्छरक्ताभाः । पद्मा-सनसंस्थाश्च क्रमादुमाद्या गुणान्तिकाः प्रोक्ताः ॥ २२ ॥

पुनराशेशास्तदनु च कुलिशाद्यादिक्रमेण संपूज्याः प्रासाद-विधानमिदं निगदितमितिसकलवर्गसिद्धिकरम् ॥ २३ ॥

अमुना विधिना महेश[illegible]जां दिनशोथः कुरुते समाहितात्मा सतु सम्यगवाप्यदृष्टभोगान्परमन्ते परिपूर्णमेति धाम ॥ २४ ॥

वक्ष्यामि शैवागमसारमष्टत्रिंशत्कलान्यासविधिं यथावत् । सपञ्चभिर्ब्रह्महरीशपूर्वैः सष्यादिकैः साङ्गविशेषकैश्च ॥ २५ ॥

ईशोनुष्टुब्भूरीश्वराः सतत्पुरुषसंज्ञगायत्र्यापः । पुनरग्न्य-नुष्टुबापो वामदेवः कतिभर्गेहरस्त्वनुष्टुब्भगयुक् ॥ २६ ॥

इन्द्रियतारसमेतं सर्वज्ञायेति हृच्छिरस्त्वमृते । तेजोमालिनि पूर्वं तृप्तायब्रह्मशिरस इति कथितम् ॥ २७ ॥

ज्वलितशिखिशिखेत्यनादिबोधाय चान्वितेति शिखा । वज्रिणे वज्रधराय स्वाहा स्वतन्त्राय वर्मनेत्रं च । सौ सौ ह्रौ बिन्दुयुतं संप्रोक्त्वा लुप्तशक्तये च तथा ॥ २८ ॥

सश्रीपशुहुंफडनन्तशक्तये तथास्त्रं स्यात समुनिच्छन्दोदैव-तयुक्तं तदङ्गषट्कमिति कथितम् ॥ २९ ॥

करदेहमुख्रन्यासं मन्त्रैः पूर्ववदाचरेत् कलाः प्रविन्यसेद्देहे वक्ष्यमाणक्रमेणतु ॥ ३० ॥

ताः स्युः पञ्चचतस्रोष्टौ त्रयोदश चतुर्द्वयम् अष्टत्रिंशत्कलाः सम्य[illegible]व्या मन्त्रवित्तमैः ॥ ३१ ॥

दिक्षुप्राग्याम्यवारीवसुपानिजभुवामेन्द्रवारार्किराज्ञां हृन्नीवांस-

द्वयीनाभ्युदरचरमवक्षःसु गुह्याङ्कयोश्च । सोर्वोर्जान्वोः सजङ्घा-स्फिगुभयकटीपार्श्वपद्दोस्तलेषु प्राणेकं बाहुयुग्मेष्वतिविशदमति-र्विन्यसेदङ्गुलीभिः ॥ ३२ ॥

विन्यासः प्रतिमाकृतौ च नितरां सांनिध्यकृत्स्यादयं देहे-चापिशरीरिणां निगदितः सामर्थ्यकारीति च । आस्ते यत्र तथा मुनेव दिनशो विन्यस्तदेहः पुमान्क्षेत्रं देशममुं च योजनमितं शैवागमज्ञाविदुः ॥ ३३ ॥

न्यस्यैवंपञ्चभिर्ब्रह्मभिरथ शिवमाराधयेदङ्गभिराभिर्मध्यप्रा-ग्याम्यसैम्यापरदिशि पुनरङ्गैरनन्तादिभिश्च । अन्योमाद्यैर्दिशापैः पुनरपि कुलिशाद्यैर्यजेदेवमुक्तं पाञ्चब्रह्मं विधानं सकलसुखयशो भुक्तिमुक्तिप्रदं च ॥ ३४ ॥

पंचाक्षरविहितविधिं वक्ष्ये जपतामभीष्टसिद्धिकरम् । सिद्धेन येन देही प्रेत्येह च वांछितफलं लभते ॥ ३५ ॥

मेषो विषो विसर्गी मृत्युः साक्षी सवाक्षरः पवनः ताराद्भवति यस्मात्तदादिरभिधीयते मनुप्रवरः ॥ ३६ ॥

अस्याक्षराण्यमूनि पंचस्युः पंचभूतगानि तथा जगदपि भूतारब्धं तेन हि जगदात्मतोदितास्य मनोः ॥ ३७ ॥

प्रोक्तमृष्यादिकं पूर्वमङ्गवर्णैस्तु मंत्रकैः । अङ्गुलीदेहवक्त्रेषु मूलमंत्राक्षरादिकान् ॥ ३८ ॥

न्यसेत्तत्पुरुषाघोरसद्योवामेशसंज्ञकान् स्वतर्जनीमध्यमान्त्यानामिकाङ्गुष्ठकेषु च ॥ ३९ ॥

वक्त्रहृत्पादगुह्याख्यमूर्धस्वपि च नामभिः प्राग्याम्यवारुणोदीच्यवक्त्रेष्वपि च मूर्धसु ॥ ४० ॥

विभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः सर्वालंकारदीप्तः सरसिजनिलयो व्याघ्रचर्मोत्तवासाः । ध्येयो मुक्तापरागामृतरसकलिताद्रिप्रभः पंचवक्त्रस्त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिष्कलोत्तुङ्गमौलिः ॥ ४१ ॥

अक्षरलक्षचतुष्कं जप्यात्तावत्सहस्रमपिजुहुयात् शुद्धैस्तिलैर्घृतैर्वा दुग्धान्नैर्दुग्धभूरुहेध्मैर्वा ॥ ४२ ॥

तत्पुरुषाद्याः सर्वे प्रधानसंप्रोक्तबाहुहेतियुताः उल्लासिमुखचतुष्कास्तेजोरूपो विलक्षणस्त्वीशः ॥ ४३ ॥

आवृतिराद्या मूर्तिभिरङ्गैरन्या पराप्यनन्ताद्यैः अपरोमादिभिरपरेन्द्राद्यैरपरातदायुधैः प्रोक्ता ॥ ४४ ॥

कथयामि मनोविधानमन्यन्मुनिपूज्यं प्रवरं पिनाकपाणेः । स्वतनौ परिकल्प्यपीठमङ्गान्यपि विन्यस्य तथैव मंत्रवर्णान् ॥४५॥

हृन्मुखांसोरुयुग्मेषु षड्वर्णान् क्रमतो न्यसेत् । कर्णमूले तथा नाभौ पार्श्वयुक् पृष्ठहृत्सु च ॥ ४६ ॥

मूर्धास्यनेत्रघ्राणेषु दोःपत्संध्यग्रकेषु च सशिरोवक्त्रहृदय-जठरोरुपदेष्वपि ॥ ४७ ॥

हृदाननपरश्वेणाभीत्याख्यवरदेषु च मुखांसहृदयेषु त्रीन्पदा-न्पादोरुकुक्षिषु ॥ ४८ ॥

उर्ध्वाधः क्रमतो न्यस्येद्गोलकान्यासमुत्तमं पुनस्तत्पुरुषाघोर-सद्योवामेशसंज्ञकान् ॥ ४९ ॥

ललाटद्व्यंसजठरहृदयेषु क्रमान्न्यसेत् पुनस्तत्प्रातिपत्त्यर्थं जपेन्मंत्रमिमं सुधीः ॥ ५० ॥

नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गावृतात्मने चतुर्मूर्तिवपु-श्छायाभासिताङ्गाय शंभवे ॥ ५१ ॥

पूर्वोक्त एव पीठे प्रागङ्गैर्मूतिशक्तिभिस्तद[illegible]ण्ड-दुर्गागुहक्षे[illegible]गणपसैन्यपाः पूज्याः ॥ ५२ ॥

अन्या च वासवाद्यैः पुनरुपहारैः क्रमेण भक्तिमता अभ्यर्चिते हुते च स्तोतव्यः संस्तवेन पुनरीशः ॥ ५३ ॥

नमोविरिञ्चविष्ण्वीशभेदेन परमात्मने सर्गसंस्थितिसंहार-व्यावृत्तिव्यक्तवृत्तये ॥ ५४ ॥

नमश्चतुर्धाप्रोद्भूतभूतभूतात्मने भुवः भूरिभारार्तिसंहर्त्रे भूतनाथाय शूलिने ॥ ५५ ॥

विश्वग्रासाय विलसत्कालकूटविषाशिने तत्कल[illegible]तग्रीव-नीलकण्ठाय ते नमः ॥ ५६ ॥

नमो ललाटनयनप्रोल्लसत्कृष्णवर्त्मने ध्वस्तस्मरनिरस्ताधि-योगिध्याताय शंभवे ॥ ५७ ॥

नमो देहार्धकान्ताय दग्धदक्षाध्वराय च चतुर्वर्गेष्वभीष्टार्थ-[illegible]यिने मायिनेऽणवे ॥ ५८ ॥

स्थूलाय मूलभूताय शूलदारितविद्विषे कालहंत्रे नमश्चन्द्र-खण्डमण्डितमौलये ॥ ५९ ॥

विवाससे कप[illegible]न्तभ्रान्ताहिसरिदिन्दवे देवदैत्या[illegible]रेन्द्राणां मौलिघृष्टांघ्रये नमः ॥ ६० ॥

भस्माभ्यक्ताय भक्तानां भुक्तिमुक्तिप्रदायिने व्यक्ताव्यक्तस्वरूपाय शंकराय नमो नमः ॥

नमोन्धकान्तकरिपवे पुरद्विषे नमोस्तु ते द्विरदवराहभेदिने विषोल्लसत्फणिकुलवद्धमूर्तये नमः सदा वृषवरवाहनाय ते ॥

वियन्मरुद्धुतवहवार्वसुंधरामखेशरव्यमृतमयूखमूर्तये नमः सदानरकभयावभेदिने भवेह नो भवभयभङ्गकृद्विभो ॥

स्तुत्वेन्दुखण्डपरिमण्डितमौलिमेव मुद्वासयेत्पुनरमुंहृदयाम्बुजे स्वे अभ्यर्च्य देवमभिसंयतचित्तवृत्तिर्भूत्वा शिवो जपतु मंत्र महेशमेनम् ॥

संतर्प्य विप्रान्पुनरवमेव संपूजयेदिन्दुकलावतंसम्। जपेद्यथाशक्तिशिवस्वरूपी भूत्वा ततोन्ते च शिवः सभूयात् ॥

हौं-उँ नमश्शिवायेतिमंत्रः प्रणवरहितोपंचाक्षरःनमश्शिवाय५अस्य षडक्षर मंत्रस्य वामदेवऋषिःपंक्तिच्छन्दः सदाशिवो देवता प्रीत्यर्थेजपेविनियोगः॥ ऋष्यादिन्यासंकृत्वा। ओं अंगुष्ठाभ्यांनमः॥ नं तर्जनीभ्यांनमः॥ मं मध्यमाभ्यांनमः॥ शिं अनामिकाभ्यांनमः ॥ वां कनिष्टका भ्यांनमः॥ यं करतलकरपृष्ठाभ्यां नमः एवं हृदयादिन्यासंविधाय ॥ गोलकन्यासादिकं कृत्वाविग्रहोर्भिः

कुठारमित्यादिध्यात्वा संपूज्य स्तुत्वाजपेत चतुर्विंशतिलक्षजपः सघृततिलादिभिस्तत्सहस्रहोमः धनधान्यमोक्षादिप्रदोऽयंमनुः ॥

## ( अथ दक्षिणामूर्तिमंत्रविधानम् )

अथ प्रवक्ष्यते मंत्रो दाक्षिणामूर्तिसंज्ञकः ॥ जपतामिष्टसंसिद्धिविधानसुरपादपः ॥ १ ॥

आत्रिः क्षिणाकालकर्णकामिकायुग्रयेक्षराः । तुध्यामध्य गताः स्युर्म्यं वटमूलनिवासिने ॥ २ ॥

नैधातृनिरताङ्गाय नमो रुद्राय शंभवे तारशक्तिनिरुद्धोऽयं मंत्रः षट् त्रिंशदक्षरः ॥ ३ ॥

शुकः प्रोक्तो मुनिश्छंन्दोऽनुष्टुप्च समुदाहृतम् दक्षिणामूर्तिरुद्रोऽस्य देवता समुदीरिता ॥ ४ ॥

तारशक्त्यादिकैर्ङाद्यन्तैर्मंत्राक्षरैःक्रमात ऋत्वक्षिवसुवस्वमि गुणवर्णैर्विभागशः ॥ ५ ॥

मंत्री कुर्यात षडङ्गानि जातियुक्ति समाहितः कालिकश्रुतिदृग्गंडद्वयनासास्यके दश ॥ ६ ॥

दोःसंधिकंठस्तनहृन्नाभिकव्यन्धुषु क्रमात् पत्संधिषु पुनर्द्वाभ्यां मंत्रविद्व्यापकं न्यसेत एवंन्यस्तशरीरोऽथ चिन्तयेन्मंत्र देवताम् ॥ ७ ॥

मुद्रां भद्रार्थदात्रीं सपरशुहरिणां बाहुभिर्बाहुमेकं जान्वासक्तं दधानो भुजगवरसमाबद्धकक्ष्यो वटाधः ॥ आसीनश्चन्द्रखण्डप्रतिघटितजटः क्षीरगौरस्त्रिणेत्रो दद्यादाद्यैः शुकाद्यैर्मुनिभिरभिनुतो भावशुद्धिं भवो वः ॥ ८ ॥

प्राक्प्रोक्तविधानेन च सम्यक्संपूज्य साधुकलशाद्यैः कृतसंदीक्षो मंत्री जप्यादेनं मनुं समाहितधीः ॥ ९ ॥

द्वात्रिंशदयुतमानं जप्याच्च जुहोतु तद्दशांशमितैः दुग्धाप्लुतैस्तिलैर्वा साज्येन पयोन्धसा द्वयेनापि ॥ १० ॥

जप्त्वैवं मंत्रमेनं दिनमनुगिरिशं पूजयित्वा च हुत्वा नत्वा स्तुत्वा मनो वाक्तनुभिरवहितः प्राप्य कामानशेषान् व्याख्याता चागमानां भुवि कविषु वरः साधुवेदान्तवेदी वादीद्रसो ऽद्वैतविद्याविमलतरमतिर्याति शैवं पदं तत ॥ ११ ॥

मंत्रः " ओंह्रींदाक्षिणामूर्तये तुभ्यं वटमूलनिवासिने ध्यानेकनिरताङ्गाय नमो रुद्राय शंभवे ह्रीं ओं ३६ अस्य दक्षिणामूर्ति-

मंत्रस्य शुकऋषिरनुष्टुप्छंदः दक्षिणामूर्तिशंभुर्देवता प्रीत्यर्थे जपे विनियोगः ॥ ऋष्यादिकं विन्यस्य ॥ ओंह्रींदक्षिणामूर्तयेह्रींओं-अंगुष्ठाभ्यां नमः ॥ ओंह्रींतुभ्यं ह्रींओंतर्जनीभ्यां नमः ॥ ओंह्रींवटमूल निवासिने ह्रींओंमध्यमाभ्यांनमः ॥ ओंह्रींध्यानेकनिरताङ्गाय ह्रींओं अनामिकाभ्यां नमः ॥ ओंह्रींनमो रुद्राय ह्रींओंकनिष्ठकाभ्यां नमः ॥ ओंह्रींशंभवे ह्रींओंकरतल करपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः॥ ध्यानंतु मुद्रां भद्रार्थदात्रीमित्याद्यष्टमश्लोकोक्तं द्वात्रिंशल्लक्षमानं जपः दुग्धाक्ततिलैर्हवनम् दशांशतः फलंतु बुद्धिविद्यादिप्राप्तिः ॥

## ( अथाघोरमंत्रविधानम् )

जीवशिखिकर्णरेफान्प्रतिवीप्स्य प्रादिकांश्च पुनरपिताद् । मेधाप्यायिनियान्तांस्तानेव तरान्तिकान्सतनुरूपान् ॥ १ ॥

आभाष्य चटप्रचटौ सकहवमौ बन्धघातयौ वीप्स्य । प्रोक्त्वा वर्मास्त्रावधि समुद्धरेच्छक्तिपूर्वकं मंत्रम् ॥ २ ॥

ऋषिरस्याघोराख्यः संप्रोक्तास्त्रिष्टुबुच्यते च्छन्दः । रुद्रोप्य-घोरपूर्वः समीरितो देवता तथास्य मनोः ॥ ३ ॥

हृत्पञ्चभिस्तद्वर्णैः शिरो हि षड्भिः शिखा तथा दशभिः । तावद्भिरेव कवचं दगष्टभिर्द्वादशभिरपि चास्त्रम् ॥ ४ ॥

कहृगास्यकंठहृन्नाभ्यन्धूरुषु जानुजंघयोः पदयोः। एका-
दशधा भिन्नैर्मंत्रार्णैर्न्यसतु विग्रहे मन्त्री ॥ ५ ॥

पञ्चभिरथो सषड्भिर्द्वाभ्यामप्यष्टभिश्चतुर्भिश्च। षड्भिश्च-
तुस्त्रयेण च षड्भिर्द्वाभ्यां च भेदितैः क्रमशः ॥ ६ ॥

कालाभ्राभः कराग्रैः परशुडमरुकौ ख[ड्ग]खेटौ च बाणे ष्वासौ
शूलं कपालं दधदातिभयदो भीषणास्यस्त्रिणेत्रः ॥ रक्ताकाराम्वरो
हि प्रवरघटितगात्रोरिनागग्रहादीन् खादन्निष्टार्थदायी भवद-
भिमतच्छित्तये स्यादघोरः ॥ ७ ॥

स्वच्छो मुमुक्षोस्तु भवेदघोरः काम्यक्रियायामपि रक्तवर्णः।
कृष्णोभिचारे ग्रहवैकृते च प्रोक्तोजपः स्यादपि लक्षमानम् ॥८॥

धृतावसिक्तैस्तिलतण्डुलैश्च जपावसाने जु[हु]याद्दशांशम् ।
घृतप्लुतैर्वाथ हविर्भिरेवं तावत्प्रजुह्वन्समुपैति कामान् ॥ ९ ॥

[ले]खा[लि]स्थितसाध्या[...]सत्कर्णिकं कलावीतम्। वर्गाष्ट-
कात्तकेसरमन्त्येसहलक्षयाक्षरोल्लसितम् ॥ १० ॥

मन्त्राक्ष[...]लमध्यदलाग्रकं च तद्बाह्ये। वह्निपुटाश्रिसा-
माश्रितकवचास्त्रं प्रतिविलि[ख्य] यन्त्रमिदम् ॥ ११ ॥

कृत्वा समाप्य मण्डलमत्र विनिक्षिप्य पूरयेत्कलशम् । पीठे पिनाकपाणेर्मन्त्रैर्वा क्वाथक्लृप्ततोयैर्वा ॥ १२ ॥

अङ्गावृतेरनु च हेतिभिरीरिताभिः पश्चाच्च मातृभिरथापि दिशाधिनाथैः । संपूजयीत विधिनेति षडक्षरोक्तमार्गेण वा मनुपरिस्फुरणाय मंत्री ॥ १३ ॥

आज्यापामार्गसामित्तिलसर्षपपायससाज्यकैश्च पृथक् । रात्रौ सहस्रहोमाद्भूतद्रोहादिशान्तिरुद्दिष्टा ॥ १४ ॥

सितकिंशुकनिर्गुण्डी कनकापामार्गजन्मनां समिधाम् । पृथगपि सहस्रहोमान्निग्रहमोक्षोऽचिराद्ग्रहाणां स्यात ॥ १५ ॥

गव्यार्क्कैर्जुहुयातपृथग् दशशतं मंत्री मयूरेध्मकै भूयस्तैश्च-तुरङ्गुलैश्च शिवपञ्चम्यां निशायां हुनेत् । सर्पिर्भार्गेसपञ्चगव्यचरु-सर्पिः स संपातकं हुत्वा तत्प्रतिभोजयेत्प्रतिशमं यान्त्येव सर्वे ग्रहाः ॥ १६ ॥

षट्कोणे कर्णिकायां स्फुरयुगलवृतां साध्यगर्भां च शक्तिं कोणाग्रे प्रस्फुरद्वन्द्वकमथ विलिखेन्मंत्रवर्णान्दले । षड्वेदद्वन्द

षड्वेदक चतुर्युगषट् संख्यकान्बाह्यषट्के वर्मास्त्राणां तदेतद्ग्रह-
गदभयहृद्यंत्रमाघोरमाहुः ॥ १७ ॥

नच रिपवो नच रोगा न ग्रहपीडा न शस्त्रबाधा च ।
न क्ष्वेलरुजामर्त्यान्स्पृशत्यघोरास्त्रमंत्रजापपरान् ॥ १८ ॥

तस्मादघोरास्त्रमनुं प्रजप्यात्समर्चयेत्तद्विहितं यथावत । हुनेच्च
तेनैव समस्तवांछासंसिद्धये चाथ विमुक्तये च ॥ १९ ॥

( अथ त्र्यक्षरमृत्युंजयमंत्रविधानम् )

खसप्तमः कर्णयुतोर्धचन्द्रवांल्लपञ्चमो द्वीन्दुयुतो ध्रुवादिकः

ॐ जूंसः

मनुः स्वयं मृत्युंजयात्मकः स्फुटं समीरितः साधकरक्षण-
क्षमः ॥ १ ॥

अथ ऋष्यादिकम्

ऋषिरस्य कहोलाख्यश्छन्दो देव्यादिका च गायत्री ।
स्याद्देवता च मृत्युंजयरुद्रोङ्गान्यथाचरेद्भूर्‌णा ॥ २ ॥

ध्यानम्

स्फुटितनलिनसंस्थं मौलिबद्धेन्दुरेखा ग[illegible] भृतजलार्द्रं

चन्द्रवह्न्यर्कनेत्रं । स्वकरकलितमुद्रापाशवेदाक्षमालं स्फटिक रजतमुक्तागौरमीशं नमामि ॥ ३ ॥

जपहोमादि कथनम्

जप्तव्योऽयं मन्त्रवर्यस्त्रिलक्षं दीक्षापूर्वं होमकृत्स्याद्दशांशैः दुग्धाज्याक्तैः शुद्धखण्डैर्गुलूच्या गुर्वादेशात्साधको हव्यवाहे ॥४॥

यन्त्र पूजा

अर्चा कार्यानित्यशः शैवपीठे स्यादप्यङ्गैर्लोकपालैस्तदस्त्रैः। सम्यक्पूजावस्तुभिर्मंत्रजापैः प्रोक्तं ह्येतन्मृत्युभेत्तुर्विधानम् ॥५॥

इतिजप ृतार्चनाद्यैः सिद्धो मन्त्रोक्तमूर्तिविहितमनुः। संभावयेन्निजान्तर्योगं कृत्यापमृत्युनाशकरं ॥ ६ ॥

तारनालमथ मध्यपत्रकं ह्याद्यकर्णिकयुतं क्रमोत्क्रमात । चिन्तयेन्नियतमन्तर शिवं नीरुजे च नियुतायुषेऽञ्जयोः ॥७॥

उर्ध्वाधः प्रोतपद्म यदलानिचिते रक्षराद्यैर्भ्रुवाद्यैः । राद्यन्तर्मन्दम प्रतिगालत सुधा रसंसिच्यमानम् ॥ ईशानं सूक्ष्मरूपं त्वमलतरसुषुम्नान्तरा सन्निषण्णं ध्यायन्नाप्नोति रोगैर्नियतपरिहृतः संजप दीर्घमायुः ॥ ८ ॥

आदौ तारं विलिखतु ससाध्याह्वयं कर्णिकायां । दिक्पत्रेष्वप्यपरमपरं चापि तत्कोणकेषु॥भूयो भूमेःपुरमनुमृगाङ्कं तदश्रेषु टान्तं । जप्त्वाबन्धं प्र गदावेषध्वंसि मृत्युंजयाख्यम् ॥९॥

इति तयन्त्रविभूषितमण्डलमध्ये निधाय कलशमपि । आपूर्यचाभिषिञ्चेच्छ्रीवश्यकरं ग्रहाभिचारहरम् ॥ १० ॥

ततश्छिन्नोद्भवानांतु समिद्भिश्चतुरङ्गुलैः । दुग्धासिक्तैः समिद्धेऽग्नौ षट्सहस्रद्वयं हुनेत् ॥ ११ ॥

यस्तु वह्नौजुहोत्येवं यावत्संख्येन साधकः । तावत्संख्यैः सुधाकुम्भैरभिः प्रीणाति शंकरम् ॥ १२ ॥

आप्यायितोऽग्निना शर्वः साधकस्येप्सितान्वरान् । प्रदद्यादायुराद्यांश्च दुरन्तान्मलयान्तिकान् ॥ १३ ॥

मंत्रान्ते सा ज्यां पालययुगलं प्रतीपमपि मंत्री । प्रोक्त्वा समापयेन्मनुमयमपि मृत्युंजयाह्वयो मंत्री ॥ १४ ॥

अथवामलकमल न्तारेतं शि वषभूषणं रुद्रम् । ध्यात्वा जपेद्यथावद्बु प्त्या मृत्युनाशनं दृष्टम् ॥ १५ ॥

चतुरङ्गुलपरिमाणैरमृताखण्डैरथार्कसाहस्रम् । जुहुयाच्च दुग्धसिक्तैरारोग्यायायुषे चलक्ष्म्यै ॥ १६ ॥

अमृतावटातिलदूर्वाः पयोघृतं पायसं क्रमेणेति । सप्तद्रव्याण्युक्तान्येतैर्जुहुयात् पृथक्सहस्रतयम् ॥ १७ ॥

तीव्रेज्वरे घोरतरेऽभिचारे सोन्मादके दाहगदे च मोहे । तनोति शान्ति नाचिरेण होमः संजीवनं चाष्टशतप्रमाणम् ॥१८॥

संभोजयेद्धोमदिनेष विप्रान्सप्ताधिकान्स्वादुभिरन्नजातैः । सतर्णका गाश्च हुतावसाने दद्याद्द्विजेभ्यो हुतकर्मकृद्भ्यः ॥१९॥

निजजन्मदिने शतं शतं यो जुहुयाद्द्रव्यवरैः ससप्तसंख्यैः । मधुरैरपि भोजयेच्च विप्रानभिवाञ्छान्नियमेन दीर्घमायुः ॥२०॥

अथवा सप्तभिरतैर्द्रव्यैरेकेन वा सहस्रतयम् । जन्मर्क्षे होममात्रान्निरुपद्रवमुत्तमं व्रजदा[illegible]ः ॥ २१ ॥

दूर्वात्रितये जुहुयान्मंत्रविदेकादशाहुतीर्दिनशः । जित्वापमृत्युरोगान्प्रयात्यसावायुषश्च दैर्घ्यमपि ॥ २२ ॥

जन्मर्क्षाणां त्रितये च्छिन्नाकाश्मर्यवकुलकैरिध्मैः । क्रमशो हुनेत्सहस्रं नश्यन्त्यपमृत्युरोगदुरितानि ॥ २३ ॥

सितासिद्धार्थसहस्राहुत्या नश्यन्त्युपद्रवा ज्वरजाः । तद्वद-पामार्गहुतामृत्युंजयमप्यरोगतां लभते ॥ २४ ॥

प्रोक्तैर्ध्यानजपार्चनाहुतविधानाद्यैश्च मृत्युंजयं योमंत्री प्रभजन्मनुं प्रतिदिनं प्रातः प्रसन्नाशयः ॥ तस्येष्टानि भवन्ति संसृतिरपि स्फीता च पुत्रादयः संपन्नः सुसुखी च जीवति चिरं देहापादि स्याच्छिवः ॥ २५ ॥

## अथाष्टाक्षरमंत्रविधानम् ।

अथ पुनरभिवक्ष्ये मंत्रमष्टाक्षराख्यं सकलदुरितदुःखध्वान्त-संभेदभानुम् प्रणवहृदयनारावर्णतोऽन्ते यणार्णौ मपर इति समुद्दिष्टोऽयमिष्टार्थदायी ॥ १ ॥

तारः शक्त्युत्थतया निर्दिष्टः सोहमर्थकः पूर्वम् । नार्णः प्रतिषेधार्थो मोकारश्चायमर्थको भवति ॥ २ ॥

सलिलानलपवनधराः क्रमेण नारायणाक्षराः प्रोक्ताः चरमे परस्तुविभाक्त्यिव्यक्त्यर्थं दर्शितस्तदर्थार्थे ॥ ३ ॥

ऋषिरस्य मनोः साध्यनारायण इतीरित श्छन्दश्च देवी गायत्री परमात्मा च देवता ॥ ४ ॥

अथ क्रुद्धमहावीरद्युसहस्रपदादिकैः उल्कैर्ज्योतियुतैः कुर्यात्पंचाङ्गानि मनोःक्रमात् ॥ ५ ॥

अष्टाक्षरेण व्यस्तेन कुर्याद्वाष्टाङ्गकं सुधीः सहृच्छिरःशिखावर्मनेत्रास्तोदरपृष्ठके ॥ ६ ॥

अर्कौघाभं किरीटान्वितमकरलसत्कुण्डलं दीप्तिराजत्केयूरं कौस्तुभाभाशवलरुचिरहारं सपीताम्वरं च । नानारत्नांशुभिन्नाभरणशतयुजं श्रीधराश्लिष्टपार्श्वं वन्दे दोः सक्तचक्राम्वुरुहदरगदं विश्ववन्द्यं मुकुन्दम् ॥ ७ ॥

संदीक्षितो मनुममुं प्रतिजप्तुमिच्छन्कुर्यान्निजेन वपुषैव तु योगपीठम् । अंसोरुयुग्मपदमाननाभिमूलपार्श्वद्वयैर्विहितगात्रसमुज्ज्वलं च ॥ ८ ॥

मध्येनन्ताद्यैरपि संज्ञानात्मान्तिकैर्यजेन्मत्री । पीठाख्यमंत्र पश्चिममथगन्धाद्यैश्च सम्यगुपचारैः ॥ ९ ॥

प्रणवं हृदयं चैव प्रोक्त्वा भगवते पदम् । विष्णवे च समाभाष्य सर्वभूतात्मने पदम् ॥ १० ॥

वासुदेवाय सर्वात्मसंयोगपदमुद्धरेत् । योगपद्मपदं प्रोक्त्वा ततः पीठात्मने नमः ॥ ११ ॥

अस्त्रमंत्रप्रबद्धाशो मंत्रवर्णांस्तनौ न्यसेत्। विन्यस्तैर्यैर्भवे-न्मंत्री मंत्रवर्णात्मको हरिः ॥ १२ ॥

आधारहृद्वदनदोः पदमूलनाभौ कण्ठे सनाभिहृदयस्तन पार्श्वपृष्ठे। कास्येक्षणश्रवणगन्धवहे च दोःपत्संध्यङ्गुलीषु हृदि धातुषु सानिलेषु ॥ १३ ॥

मूर्धेक्षणास्यहृदयोदरसोरुजंघापादद्वयेषु लिपिशो न्यसतु क्रमेण गंडासकोरुचरणेषु रथाङ्गशंखश्रीमद्गदाम्बुजपदेषु समाहितात्मा ॥ १४ ॥

ततोष्टाक्षरपूत्यर्थं स्मर्तव्यो द्वादशाक्षरः मंत्रो द्वादशमूर्तीस्तु तत्प्रभिन्नास्तनौ न्यसेत् ॥ १५ ॥

अष्टप्रकृत्यात्मकश्च संप्रोक्तोऽष्टाक्षरो मनुः अष्टानां प्रकृतीनां च चतुर्णामात्मनामपि ॥ १६ ॥

द्वादशानां तु संयोगो मंत्र स्याद्द्वादशाक्षरः आदित्या द्वादश प्रोक्ता युक्ता द्वादशमूर्तिभिः ॥ १७ ॥

केशवादिप्रदिष्टानां मूर्तीना द्वादशादितः आदिस्वरयुता-न्यस्येत्ताः स्युर्द्वादशमूर्तयः ॥ १८ ॥

ललाटोदरहृत्कण्ठदक्षपार्श्वांसतद्गले तथा वामत्रये पृष्ठे ककुदोश्च यथाक्रमम् ॥ १९ ॥

द्वादशाक्षरमंत्रं च मंत्रविन्मूर्ध्नि विन्यसेत मूर्धस्थो वासुदेवस्तु व्याप्नोति सकलां तनुम् ॥ २० ॥

पुनस्तत्प्रातिपत्त्यर्थं किरीटादिमनुं जपेत किरीटकेयूरहारपदान्याभाष्य मंत्रवित ॥ २१ ॥

मकरान्ते कुंडले च चक्रशंखगदादिकम अब्जहस्तपदं प्रोक्त्वा पीताम्बरधरेति च ॥ २२ ॥

श्रीवत्सांकितमाभाष्य वक्षःस्थलमथोवदेत श्रीभूमिसहितं स्वात्मज्योतिर्द्वयमथो वदेत् ॥ २३ ॥

दीप्तिमुक्ताकरायेति सहस्रादित्यतेजसेद्भूदन्तः प्रणवादिः स्यात्किरीटादिमनुः स्वयम् ॥ २४ ॥

कृत्वा स्थडिलमस्मिन्निक्षिप्य निजासिकां समुपविश्य । पीठादिकं निजाङ्गे प्रपूज्य गंधादिभिः सुशुद्धमनाः ॥ २५ ॥

सद्वादशाक्षरान्तं प्रपूज्य विधिवत्किरीटमंत्रेण कुर्यात्पुष्पांजलिमपि निजदेहे पंचशोऽथ वा त्रयशः ॥ २६ ॥

इति दीक्षितविहितविधिः संप्रोक्तोऽष्टाक्षरस्य मंत्रस्य शुद्धानां विमलधियां दीक्षा प्रतिवक्ष्यतेऽथ संक्षेपात् ॥ २७ ॥

कृत्वा त्रिगुणितादीनामेकं मण्डलमुज्वलम् आत्मार्चनोक्त-विधिना शक्तिभिः पीठमर्चयेत् ॥ २८ ॥

विमलोत्कर्षिणी ज्ञाना क्रिया योगेतिशक्तयः प्रह्वी सत्या तथेशानानग्रहा नवमी तथा ॥ २९ ॥

निधाय कलशं तत्र पंचगव्येन पूरयेत् पयोभिर्वा गवां प्रोक्तैः कथितैर्वाष्टगंधकैः ॥ ३१ ॥

अष्टाक्षराङ्गैरष्टाष्टवर्णैरष्टाक्षरान्वितैः दलमूले यजेद्भूयो वासु-देवादिकान्क्रमात् सशक्तिकांस्ततोबाह्ये संपूज्या हरिहेतयः ॥३१॥

चक्रसशङ्खगदाम्बुजकौस्तुभशार्ङ्गाः सखङ्गवनमालाः रक्ता-च्छपीतकनकश्यामलकृष्णद्युशुक्लभासः स्युः ॥ ३२ ॥

ध्वजश्च वैनतेयश्च शंखपद्मौ दिगाश्रिताः विघ्नार्यकौ तथा दुर्गाविष्वक्सेनौ विदिग्गताः ॥ ३३ ॥

ध्वजः श्यामो विपो रक्तो निधी शुक्लारुणप्रभौ अरुणश्या-मलश्यामपीताविघ्नादयो मताः ॥ ३४ ॥

इन्द्रादयस्तद्बहिश्च पूज्या गन्धादिभिः क्रमात् इति विष्णो र्विधानंतु पंचावरणमुच्यते ॥ ३५ ॥

एवमभ्यर्चिते विष्णावुपचारैस्तु पूर्ववत् अग्निमाधाय कुंडे तु ब्रह्मयागसमीरितैः ॥ ३६ ॥

जुहुयादष्टभिर्द्रव्यै र्मनुनाष्टाक्षरेण तु पृथगष्टशतावृत्त्या हुत्वा दत्वा वलिं ततः ॥ ३७ ॥

अभिषिच्य गुरुः शिष्यं प्रवदेत्पूर्ववन्मनुम् । द्वात्रिंशल्लक्षमानेन स तु मंत्रं जपेत्ततः । तदर्धसंख्यकं वापि शुद्धाचारो जितेन्द्रियः ॥ ३८ ॥

पद्मासनो प्राग्वदनोऽप्रलापी तन्मानसस्तर्जनिवर्जिताभिः अक्षस्रजो वाङ्गुलिभिर्जपेत नातिद्रुतं नातिबिलम्बितं च॥३९॥

प्रागीरितैरपि जुहोतु दशांशकं वा द्रव्यैः शुभैः सरसिजैर्मधुराप्लुतैर्वा । रत्नांशुकप्रवरकाञ्चनगोमहीभिर्धान्यैर्यथा विभवतः प्रयजेद्गुरूंश्च ॥ ४० ॥

विप्रान्प्रतर्प्य विभवैरथमंत्रजापी सेहादयेज्जपविधिं च ततः क्रमेण नित्यार्चना च विहिताविधिनामुनैव प्रोक्तम् न विदधात्वथवात्म[illegible]जाम् ॥ ४१ ॥

इति जपहुतार्चनाद्यैर्मंत्री योऽष्टाक्षरं समभ्यस्येत् सत्वैहिकीं च सिद्धिं संप्राप्यान्ते प्रयाति परमपदम् ॥ ४२ ॥

अङ्गानि पूर्वं त्वथमूर्तिशक्तीः सकेशवादींश्च पुरंदरादीन् । समर्चयेद्यस्तु विधानमेतन्नरोऽचिरात्काङ्क्षितमेति कामम् ॥ ४३ ॥

यष्टव्यः स्याद्वासुदेवादिरादौ चक्राद्याः केत्वादिकाः केशवाद्याः इन्द्राद्याश्चेत्येवमेवप्रदिष्टं तुष्टयायुःश्रीकीर्तिसिद्ध्यै विधानम् ॥४४॥

स वासुदेवादिकमर्चयित्वा भूयो ध्वजादींश्च पुरंदरादीन् क्रमेणविद्वान् विधिनार्चयीतेत्ययं क्रमश्च त्रिदशाभिपूज्यः । इत्युक्तविधिचतुष्के पूजयितुरथैकमपि यथाशक्ति । अचिरेण-भवति लक्ष्मीर्हस्तगता सकलवर्गसिद्धिकरी ॥ ४६ ॥

अष्टाक्षराक्षराष्टकमूर्तिन्निधानानिभेदभिन्नानि । वक्ष्याम्यर्चयितॄणां वांछितसकलार्थसाधनानि सदा । सिन्दूरकुन्दकरविन्दकवन्धुजीव काश्मीरपद्ममकरन्दरुचः क्रमेण । नीलोत्पलाम्बुरुहरागसमानवर्णाःस्युर्मूर्तयोष्टकथिता मनुवर्णजाताः ॥४८ ॥

अरिदरगदाब्जहस्ताः सर्वास्तुनकारमोर्णयोर्मंत्री शङ्खारिगदाब्जकरे लक्षणमन्यत्समानरूपं स्यात ॥ ४९ ॥

या मूर्तिरर्च्यतेऽस्य व्रजन्ति परिवारितां तदवशिष्टाः। अवशिष्टेन्त्येर्थांशे स्वयं च परिवारितां प्रयाति तदा ॥ ५० ॥

इयमेवावृतिरधिका ध्रुवजे ध्रुवजात्पुरा समुद्दिष्टात्। भवति विधानादिति पुनरेषां प्रथमं विधानमुद्दिष्टम् ॥ ५१ ॥

अथद्वितीयाक्षरतोऽङ्गतोन्ते वर्णाष्टमूर्तीरपि मूर्तिशक्तीः। यजेद्विधाने च सकेतुलोकपालादिकानुक्तविधानक्लृप्त्या ॥५२॥

मोकारजे रतिधृती च सकान्तितुष्टिपुष्टिस्मृतीरपि च दीप्त्याभिधां च कीर्तिम्। केत्वादिकं च सशतक्रतुपूर्वकं च सं:ज्जयोद्धेमलधीः पुनरन्वितोन्ते ॥ ५३ ॥

नाकारजेऽङ्गतोन्ते प्रपूजयेन्मूर्तिशक्तिलोकेशान्। रावर्णजेऽङ्गमूर्तिश्रीभूमायामनोन्मनीस्तदनु ॥ ५४ ॥

ह्रीः श्रीरतिः सपुष्टिर्मोहनिमाये महादियोगाद्ये। मायेन्त्र तृतीयावृतिरन्य शेषं पुरैवानिर्दिष्टम् ॥ ५५ ॥

यकारजेरिशङ्खौच सगदाहलशार्ङ्गकाः। मुशलः खङ्गशूलो च तृतीया साक्षरोद्भवे ॥ ५६ ॥

शेषो वासुकितक्षककार्कोटकपङ्कजमहापद्माः । नरपाल-
गुलिकसंज्ञास्तृतीयमन्यत्समं विधानेऽन्त्ये ॥ ५७ ॥

अङ्गैः प्रथमावरणं मूर्तिभिरपि शक्तिभिर्द्वितीयमपि । अन्यैः केशवकेत्वादिभ्यां स्यात्पञ्चमं च मत्स्याद्यैः ॥ ५८ ॥

मत्स्यः कूर्मवराहौ नृसिंहकुब्जत्रिरामकृष्णाश्च । कल्किः सानन्तात्मा पुनरमृतात्मा च षष्ठमहिपाद्यैः ॥ ५९ ॥

सप्तममपि लोकेशैरष्टममपि तदायुधैश्च संप्रोक्तम् । प्रागुक्तेषु विधानेष्वालक्ष्यं नोक्तमत्र यत्तदपि ॥ ६०॥

अष्टाक्षराक्षरविधानचतुष्कयुग्मं प्रोक्तक्रमेणविधिनाभियजेद्य-एनम् । भक्त्या मुकुन्दमनुजापरतो नराग्र्यः प्राप्नोति वाञ्छित-मयत्नत एव कामम् ॥ ६१ ॥

अष्टाक्षरविष्णुमंत्रः ओं नमो नारायणाय

अस्य श्रीमदष्टाक्षरमंत्रस्य साध्यनारायणऋषिः देवी गाय-त्रीछंदः विष्णुर्देवता इष्टार्थे जपे विनियोगः । ऋष्यादिन्यासं विधाय । ओं क्रुद्धोल्काय अंगुष्ठाभ्यां नमः ॥ ओं महोल्काय तर्जनी-भ्यां नमः ॥ ओं वीरोल्काय मध्यमाभ्यां नमः ॥ ओं द्युल्काय

अनामिकाभ्यांनमः ओं सहस्रोल्काय करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । ॐ ऊँ नमः हृदयाय नमः । ओं नं नमः शिरसे स्वाहा ओं मों नमः शिखायै वषट् ओं नां नमः कवचाय हुं ओं रां नमः नेत्रत्रयाय वौषट् ओं यं नमः अस्त्राय फट् ओं णां नमः कुक्ष्योः ओं यं नमः पृष्ठे इति मंत्रवर्णैरष्टांगन्यासः । ओं ओं नमः आधारे एवं हृदि । मुखे । दक्षभुजे । वामभुजे । दक्षपादे । वामपादे । नाभौ । इति प्रथमन्यासः । कंठे नाभौ हृदि दक्षस्तने वामस्तने दक्षपार्श्वे। वामपार्श्वे पृष्ठे। इतिद्वितीयन्यासः । मूर्ध्नि मुखे दक्षनेत्रे वामनेत्रे दक्षकर्णे वामकर्णे दक्षनासापुटे वामनासापुटे। इतितृतीयन्यासः। दक्षवाहुमूले दक्षकूर्परे दक्षमणिवंधे दक्षहस्ताङ्गुलिमूले दक्षहस्ताङ्गुल्यग्रे वामवाहुमूले वामकूर्परे वाममणिवंधे । इतिचतुर्थन्यासः । वामहस्तांगुलिमूले वामहस्तांगुल्यग्रे दक्षपादमूले दक्षजानुनि दक्षिणांगुलौ दक्षपादांगुलिमूले दक्षपादांगुल्यग्रे वामपादमूले इति पंचमन्यासः । वामजानुनि वामगुल्फे वामपादांगुलिमूले वामपादांगुल्यग्रे हृदये करंदत्वा त्वचि रक्ते मांसे मेदसि । इति षष्ठन्यासः । अस्थि मज्जायाम् शुक्रे प्राणे हृदि दक्षगले वामगले हृदि । इति सप्तमन्यासः । मूर्ध्नि नेत्रयोः मुखे हृदि कुक्षौ ऊर्वोः जंघयो पादयोः । इत्यष्टमन्यासः । गंडांसकोरुचरणेषु रथाङ्गशंखगदाम्बुजान् न्यसेत ॥ मूर्तिपंजरन्यासं कुर्यात ओं ओं अं

केशवाय धात्रे नमः ललाटे ॐ नं आं नारायणायार्यम्णे नमः कुक्षौ ॐ मों ईं माधवाय मित्राय नमः हृदि ॐ भं ईं गोविन्दाय वरुणाय नमः कंठे ॐ गं ऊं विष्णवेंऽशवे नमः दक्षपार्श्वे ॐ वं ऊँ मधुसूदनाय भगाय नमः दक्षिणांशे ॐतेंऐंत्रिविक्रमाय विवस्वते नमः गलदक्षभागे ॐवांऐंवामनेन्द्राय नमः वामपार्श्वे ॐ सुं ओं श्रीधराय पूष्णे नमः वामांसे ॐदेऔंहृषीकेशाय पर्जन्याय नमः गलवामभागे ॐवांअंपद्मनाभाय त्वष्ट्रे नमः पृष्ठे ओंयंअःदामोदराय विष्णवे नमः ककुदि ॐनमोभगवते वासुदेवाय मूर्ध्नि ॐकिरीटकेयूरहारमकरकुंडलचक्रशंखगदांभोजपीताम्वरधरश्रीवत्सांकितवक्षःस्थलश्रीभूमिसहितात्मज्योतिर्द्वयदीप्तकराय सहस्रादित्यतेजसे नमः शिरआदिपादान्तं व्यापकं विन्यस्य ध्यानं तु "अर्कौघाभं इत्यादि सप्तमश्लोकस्थं द्वात्रिंशल्लक्षजपः दशांशं हवनं कमलैर्मधुराक्तैर्जुहुयात् ॥

## ( अथ द्वादशाक्षरमंत्रविधानम् )

अथोच्यते द्वादशवर्णसंज्ञो मंत्रस्तु साङ्गः सजपः सहोमः
विधानतो यं प्रतिजप्यभक्ताः भुक्तेश्च मुक्तेश्च पदं भवेयुः ॥१॥

तारं सहृदयं मध्ये गवतेस्युर्भवार्णयोः सुययोश्च तथा देवा
मंत्रोऽयं द्वादशाक्षरः ॥ २ ॥

ऋषिः प्रजापतिश्छन्दो गायत्रं विष्णुरुच्यते देवताहृद्ध्रुवेण स्यान्नमसा शिरउच्यते ।। ३ ।।

चतुर्भिश्च शिखावर्णैः पंचभिः कवचं भवेत् प्रोक्तमस्त्रं समस्तेन पंचाङ्गविधिरुच्यते ।। ४ ।।

सपादजानुयुगललिङ्गनाभ्युदरेषु च हृद्दोर्गलास्यदृङ्मस्तशिखास्वक्षरतो न्यसेत ।। ५ ।।

शिखाललाटनेत्रास्यगलदोर्हृदयेषु च सकुक्षिनाभिलिङ्गाख्यजानुपादेषु विन्यसेत् ।। ६ ।।

हृत्कुक्षिनाभिषु तथा गुह्यजानुपदेष्वधः करकंठास्यदृङ्मस्तशिखासूर्ध्वं च विन्यसेत् ।। ७ ।।

संहृतेर्दोषसंहारः सृष्टेश्च शुभपुष्टयः स्थितेश्च शान्तिविन्यासस्तस्मात्कार्यस्त्रिधा मतः ।। ८ ।।

हरिमुज्वलचक्रदराब्जगदा कुलदोः परिघं सितपद्मगतम्
वलयाङ्गदहारकिरीटधरं नवकुन्दरुचं प्रणमामि सदा ।। ९ ।।

विधिवदथ विहितदीक्षो जपेन्मनुं वर्णलक्षमानममुं शुद्धैश्च तिलैर्जुहुयाद्द्वादशसाहस्रकं तथा मंत्री पीठे हरेरथाङ्गैः सशक्ति-

भिर्मूर्तिभिस्तदनु यजेत् केशवसुरनाथाद्यैरपि देवं भक्तिपूर्वतो विद्वान् ॥ १० ॥

समिधामथदुग्धवृक्षजानां जुहुयादर्कसहस्रकं सदुग्धम् । मनसः परिशुद्धये मनस्वी सघृतेनापि पयोन्धसा सितेन ॥ ११ ॥

द्वादशाक्षरजपं तु सार्चनं योभजेत्सुनियतो दिने दिने ऐहिकं समुपलभ्य वांछितं प्रेत्य याति पदमक्षयं हरेः ॥ १२ ॥

अथ द्वादशाक्षरमंत्रः ओं नमा भगवते वासुदेवाय

अस्य द्वादशाक्षर मंत्रस्य प्रजापतिर्ऋषिर्गायत्रीछंदः वासुदेवो देवता प्रीत्यर्थे जपे विनियोगः ऋष्यादिकं कृत्वा ओं अंगुष्ठाभ्यां नमः नमः तर्जनीभ्यां नमः भगवते मध्यमाभ्यां नमः वासुदेवाय अनामिकाभ्यां नमः ओं नमो करतलकरपृष्ठाभ्यां फट् एवं हृदयादिन्यासः ततोसृष्टिस्थितिसंहारन्यासान् कृत्वा "हरिमुज्वलचक्रदराब्जगदेत्यादिनवमश्लोकोक्तं ध्यात्वा द्वादशलक्षजपः तदंते द्वादशसहस्रक्षीरवृक्षसमिद्धोमः ॥

## ( अथ नृसिंहमंत्रविधानम् )

अथ प्रवक्ष्यामि नृसिंहमंत्रस्यानुष्टुभः संग्रहतो विधानम्

साङ्गं सजापं सहुतकर्म च सार्चाविधानं निजवांछिताप्त्यै ॥१॥

उग्रं वीरयुतं महान्तिकमथो विष्णुं ज्वलन्तान्वितं संप्रोक्त्वाथ च सर्वतोमुखनृसिंहार्णं तथा भीषणं भद्रं मृत्युयुतं च मृत्युमपि च प्रोक्त्वा नमाम्यायुतं भूयोहं पदमुद्धरेन्मनुमिमं मंत्री समस्तार्थकम् ॥ २ ॥

ब्रह्मा प्रजापतिर्वा प्रोक्तऋषिर्नारदश्च विद्वद्भिः छन्दोऽनुष्टुवुदाहृतमथ विष्णुर्देवता नृसिंहाख्यः ॥ ३ ॥

वणश्चतुर्भिरुदितं हृदयं शिरश्च तावद्भिरष्टभिरथास्य शिखा प्रदिष्टा षड्भिश्च वर्मनयनं च चतुर्भिरस्त्रं प्रोक्तं क्रमेण मनुनाक्षरशः षडङ्गम् ॥ ४ ॥

सशिरो ललाटदृग्युगमुखकरपदसंधिकेषु साग्रेषु उदरहृदोगलपार्श्वेष्वपरे ककुदि क्रमान्न्येसद्वर्णान् ॥ ५ ॥

प्रतिपत्तिरस्य चोक्ता प्रसन्नता क्रूरता विशेषेण द्विविधा प्रसन्नया स्यात्साधनपूजान्यया प्रयोगविधिः ॥ ६ ॥

जान्वोरासक्तदीर्घस्वनखरुचिलसद्बाहुसंस्पृष्टकेशश्चक्रं शंखं च दोर्भ्यां दधदनलसमज्योतिषा भग्नदैत्यः ज्वालामालापरीतं

रविशशिदहनत्रीक्षणं दीप्तजिह्वं दंष्ट्रोग्रं धूतकेशं वदनमपि-वहन्पातु वो नारसिंहः ॥ ७ ॥

उद्यद्भास्वत्सहस्रप्रभमशनिनिभत्रीक्षणैर्विक्षरन्तं वन्हीनह्वाय विद्युत्तातिविततसटाभीषणं भूषणैश्च । दिव्यैरादीप्तदेहं निशितनख लसद्बाहुदंडैरनेकैः संभिन्नं भिन्नदैत्येश्वरतनुमतनुं नारसिंहं नमामि ॥ ८ ॥

नरसिंहममुं धियैव पूर्वंप्राणिपत्यार्घ्यकपाद्यसाचमाद्यैः प्रयजे-त्सहगन्धपुष्पधूपादिभिरेवं प्रवरैश्च नृत्यगीतैः ॥ ९ ॥

सुविशदमतिरथवहिरपि सम्यक् संपूज्य वैष्णवं पीठम् तत्रावाह्य च नरहरिमुपचारैः सम्यगर्चयेत्प्रवरैः ॥ १० ॥

अङ्गैः प्रथमावृतिरपि पक्षीन्द्रानन्तशर्वकमलभवैः सश्रीह्री-धृतिपुष्टिभिरपरोक्ता लोकपालकैरन्या ॥ ११ ॥

प्राक्प्रत्यग्यमशशिनां दिगाश्रया मूर्तयोऽनलादिषु च स्युः शक्तय इत्येवं भक्त्या परया युतोर्चयेद्देवम् ॥ १२ ॥

द्वात्रिंशकैस्तैराधिकृतिरयुतैर्भवेत्पुरश्चरणम् तावद्भिस्ता-वद्भिर्लक्षैः सिद्धिः समीरितास्य मनोः ॥ १३ ॥

विकृतिद्विगुणसहस्रैर्जुहुयादाज्यान्वितैश्च दुग्धान्नैः जपसं-
पूर्तौ मंत्री दिनशः संपूजयेच्च नरसिंहम् ॥ १४ ॥

विधाय तद्बीजविशिष्टकर्णिकं चतुश्चतुर्वर्णलसद्दलाष्टकम्
सुलक्षितं मण्डलमन्यलक्षणैर्निधाय तस्मिन्कलशं प्रपूर्य च ॥१५॥

यथोक्तमार्गेण समर्च्य साष्टकं सहस्रसंख्यं प्रजपेन्मनुं ततः
त्रिरुच्चरन्मंत्रमथाभिषेचयेद्यमेषमृत्यो र्विनिवर्तते मुखात् ॥ १६ ॥

वर्णान्तानलभुवनार्द्धेन्दुभिरुक्तं नृसिंहबीजमिदम् । तन्ना-
स्तिसम्यगमुना मंत्रविदा साधितेन यदसाध्यम् ॥ १७ ॥

विभवानुरूपतोऽस्मै दातव्या दक्षिणा च निजगुरवे ।
प्राणप्रदानकर्त्रे न तु कार्यं वित्तशाठ्यममलधिया ॥ १८ ॥

संप्रीणयत्वागुरुमात्मशक्त्या संभोजयेद्विप्रवरान्यथावत्
सत्वैहिकीं सिद्धिमवाप्य शुद्धं पदं परत्रापि पदं समेति ॥१९॥

दूर्वात्रिकैरष्टसहस्रसंख्यैराराध्य मंत्री जुहुयादथाप्सु शान्ति
प्रयान्त्येव तदोपसर्गा आपो हि शान्ता इति च श्रुतिः
स्यात् ॥ २० ॥

उत्पाते महति सति ह्युपद्रवाणां होमोऽयं भवति च

शान्तिदो नराणाम् । यद्वान्यन्निजमनसेप्सितं च कामं तञ्चाप्नोत्यखिलनृणां प्रियश्च भूयात् ॥ २१ ॥

दुःस्वप्नेष्वपि दृष्टेष्ववशिष्टा जाग्रता निशा नेया जपमानमन्त्रश्च्या सुस्वप्नो भवति तत्क्षणादेव ॥ २२ ॥

चरन्वने दुष्टमृगाहिचौरव्यालाकुले मंत्रममुं जपेद्यः असाधितं साधितमेव तस्य न विद्यते भीर्बहुरूपजाता ॥ २३ ॥

जप्तेनाष्टसहस्रं कलशेनाप्यहिविषार्तमाभिषिंचेत् अतिविषमेणापि विषेणाप्यसौ विमुक्तः सुखी भवति ॥ २४ ॥

मूषिकलूतावृश्चिकबहुपादाद्युत्थितं विषं शमयेत् । अष्टोत्तरशतजापान्मनुरयमभिमंत्रितं च भस्माद्यम् ॥ २५ ॥

सशिरोक्षिकर्णहृच्छूलकुक्षिरुजाज्वरविसर्पवामीहिक्काः ॥ मंत्रौषधाभिचारकृतान्विकारानयं मनुः शमयेत ॥ २६ ॥

नरहरिवपुषात्मना गृहीतं हरिणाशिशुं निजवैरिणं विचिन्त्य क्षिपतु गगनतः क्षितौ सुदूरं यमसदनं प्रति चाद्यते समासात ॥ २७ ॥

यां च दिशं प्रतिमनुना क्षिप्तोऽसौ तां दिशं प्रयात्यचिरात्।
पुत्रकलत्रधनादींस्त्यक्त्वात्वपुनर्निवृत्तये सहसा ॥ २८ ॥

नरहरिवपुषात्मना निजारिं नखरखराग्रसमग्रभिन्न देहम् क्षणमिवनिहतं विचिन्त्य खादन्निवजपतां मनुमेष नाशमेति ॥ २९ ॥

पूर्वतरे मृत्युपदे विधाय निजसाध्यनाम मंत्रितमः क्रूरेण चक्षुषा तं दहन्निवालोक्य जपतु सप्तदिनम् ॥ ३० ॥

दिनशोष्टोर्ध्वसहस्रं म्रियते रिपुरस्य नात्रसंदेहः मारणकर्म न शस्तं क्रियते यद्ययुतमथ जपेच्छान्त्यै ॥ ३१ ॥

वश्याकृष्टिद्वेषणमोहोच्चाटादिकानि यदि वाञ्छेत तदर्हया प्रतिपत्या तत्तत्कर्मप्रसाधयेन्मंत्री ॥ ३२ ॥

दिनमनुदिननाथं पूजयित्वा दिनादौ नरहरिमपिसम्यक्-प्रोक्तमार्गेणमंत्री तदनु तदनुमत्या भस्मना मंत्रितेन प्रतिरचयतु राज्ञे वाप्यभीष्टायरक्षां ॥ ३३ ॥

न्यासोक्तेषु स्थानेष्वपि न्यसेद्भस्मना समंत्राणम् अखिलो-पद्रवशान्त्यै संपत्यै वांछितार्थसंसिद्ध्यै ॥ ३४ ॥

अथ परराष्ट्रजयेच्छो राज्ञः कुर्यात्प्रयोगविधिमेवम्। नरहरि-
मपि विधिना तं हिरण्यकशिपुद्विषं समभ्यर्च्य ॥ ३५ ॥

तस्य पुरस्ताद्वेधिवन्निधाय वह्निं विभीततरुकाष्ठैः उज्वालिते
च ज्वलने समूलतूलैः शरेध्मदशशतकैः खादन्निवोच्चरन्मनु-
मरींश्च भिन्दन्निवक्षिपेत्समिधः ॥ ३६ ॥

हुत्वा परराष्ट्रेभ्यः पृतनां संनाह्य च पुरस्तस्याः निघ्नन्तं
रिपुसेनां स्मरन्नृसिंहं पुरेव दितितनयात् ॥ ३७ ॥

यावज्जितारिरेष्यति नृपतिस्तावज्जपेत्स्मरन्नेवम्। सेन्द्रसुरा-
सुररक्षो यक्षानपि जयति का कथा मनुजे ॥ ३८ ॥

श्रीकामः श्रीप्रसूनैर्दशकमथ शतानां हुनेद्बिल्वकाष्ठैस्तत्प-
त्रैर्वा प्रसूनैः सुमतिरथसमिद्भिः फलैर्वा तदीयैः। पुत्रेप्सुः
पुत्रजीवेन्धनाचितदहने तत्फलैर्वा सहस्रं दूर्वाभिस्त्वायुषेऽब्दाद-
भिमतमखिलं प्राप्नुयान्मंत्रजापी ॥ ३९ ॥

ब्राह्मीं वचां वाष्टशताभिजप्तां प्रातःसमद्यान्नृहरिं विचिन्त्य
संप्राप्य मेधां स तु वेदशास्त्रानेष्णातधीः स्यादपि वत्सरेण ॥४०॥

उक्तैः किमत्र वहुभिर्मनुनामुनैव संप्रार्थितं सकलमेव

लभेद्विधिज्ञः । तस्मादमुं भजत तत्प्रतिपन्नचित्ताः संसारसागर समुत्तरणार्थिनो ये ॥ ४१ ॥

पाशांकुशान्तरितशक्तिनृसिंहबीजैर्वर्मास्त्रयुङ्मनुरयं कथितः षडर्णः ऋष्यादिकाः स्वभवपङ्क्तिकनारसिंहावर्णैश्च मंत्रनिहितैः कथितं षडङ्गम् ॥ ४२ ॥

अव्यान्निर्व्याजरौद्राकृतिरभिविवृतास्योल्लसत्तीक्ष्णदंष्ट्रश्चक्रं शङ्खं च पाशांकुशकुलिशगदादारणाख्यान्दधानः रक्ताकारश्च नाभेरध उपरि सितो दिव्यभूषाविशेषो देवोऽर्काग्नीन्दुनेत्रो निखिलसुखकरो नारसिंहश्चिरं वः ॥ ४३ ॥

हृल्लेखान्तःस्थसाध्यं दहनपुरयुगाश्रिस्थमंत्रार्णमन्तः सिंहानुष्टुप्चतुर्वर्णकलसितदलाढ्यं कलाकेसरं च वृत्तोद्यद्व्यं-जनावेष्टितमवनिपुराश्रस्थचिन्तोपलं तद्यंत्रं रक्षः पिशाचामय विषयरिपुध्वंसनं नारसिंहम् ॥ ४४ ॥

इतिविरचितयंत्र प्रोज्ज्वले मंडले प्राक्समभिहित-कषायाम्भोभिरापूर्य कुंभम् । प्रति यजतु तदङ्गैरस्त्रभेदैस्तदीयैस्त-दनुमखशताद्यैः साधुवज्रादिकैश्च ॥ ४५ ॥

रथचरणशंखपाशाङ्कुशकुलिशग . ह्वयानि चास्त्राणि दारुण-

मुद्राकरयोर्ययोस्तदीयौ कृपाणखेटाख्यौ ॥ ४६ ॥

इति कृतदीक्षप्रजपेदक्षरलक्षप्रमाणकं मंत्रम् जुहुयाच्च षट्सहस्र जपावसाने घृतेन शुद्धेन ॥ ४७ ॥

खरमंजरीसमुत्थं जुहुयादथ मंजरीसहस्रतयम् स्नातपंचगव्यं सप्तदिनं भूतशांतये मंत्री ॥ ४८ ॥

छिन्नरुहां समिधां त्रिसहस्रं यश्च जुहोति चतुर्दिनमात्रम् दुग्धयुजं नचिरान्मनुजानां होमविधिर्ज्वरशान्तिकरः स्यात॥४९॥

अस्य यंत्रमाभलिख्य भूर्जके साधुचाथ तृणराजपत्रके मंत्रजप्तमपिशीर्षवन्धनाज्जूर्तिविभ्रमशिरोरुजापहम् ॥ ५० ॥

रक्तोत्पलैः प्रतिदिनं मधुरत्रयाक्तैर्यो वा जुहोति नियमेन सहस्रसंख्यैः मासेन वांछितमवाप्स्यति मंत्रजापी स्याद्वत्सरेण धनधान्यसमृद्धगेहः ॥ ५१ ॥

आरक्तस्तरणिसहस्रकं प्रफुल्लैरम्भोजैस्त्रिमधुरसंयुतैर्जुहोति लक्ष्मीः स्यादथमहती महत्तथायुः संप्राप्तः सकलजगत्प्रियश्च भूयात ॥ ५२ ॥

लाजाभिस्त्रिमधुरसंयुताभिरह्नो मासार्धं प्रतिजुहुयान्मुखे

सहस्रं कन्यार्थी प्रतिलभते वरोऽथकन्यां कन्या वा भवति वरार्थिनी वराढ्या ॥ ५३ ॥

तिलैः सराजीखरमंजरीसामिद्धविर्घृतैश्च द्विसहस्रसंख्यकैः प्रजुह्वतो नैव रुजा ग्रहोद्भवा नचाभिचारक्षतिरस्य जायते ॥५४॥

दशाधिकशतः पयोघृतयुतैश्च दूर्वात्रयैर्हुनेद्दिनमुखेऽपि यो नरहरिं विचिन्त्यानले अवाप्य स तु दीर्घमायुरखिलैर्वियुक्तोगदैः सुखी भवति मानवो निजकल[illegible]आदिभिः ॥ ५५ ॥

विस्तारैः किं प्रतिजपति यो मंत्रमेनं यथोक्तं लब्ध्वा कामान्समभिलषितानाशु मंत्री स भूयः द्रव्यैराढ्यो द्विजनृपवरैः पूजितः शान्तचेताः स्यादप्यन्ते परमपरिशुद्धं परं धाम विष्णोः ॥ ५६ ॥

अथनृसिंहमंत्रः । उग्रंवीरं महाविष्णुं ज्वलन्तं सर्वतोमुखं नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् । अस्य श्रीनृसिंहमंत्रस्य ब्रह्माऋषिरनुष्टुप्छंदः नृसिंहो देवता प्रीत्यर्थे जपे विनियोगः ॥ ऋष्यादिकं विधाय । उग्रंवीरं हृदयाय नमः । महाविष्णुं तर्जनीभ्यां नमः । ज्वलन्तं सर्वतोमुखं मध्यमाभ्यां नमः । नृसिंहं भीषणं अनामिकाभ्यां नमः । भद्रं मृत्युमृत्युं कनिष्ठकाभ्यां नमः । नमाम्यं

करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिन्यासं कृत्वाक्षरशः शिर ललादिषु क्रमान्न्यसेत् ततो जान्वोरासक्ततीक्ष्णेत्यादिध्यात्वा पूजादिकं कृत्वा जपेत् द्वात्रिंशल्लक्षजपः द्वात्रिंशत्सहस्रहोमः घृत युक्तपायसेन ( क्ष्रौं ) अयमेकाक्षरोमनुः पूजादिकं मंत्रराजवत । आंह्रीक्ष्रौंक्रौंहुंफट्अयंषडक्षरः अस्य षडक्षरमंत्रस्य ब्रह्माऋषिः पंक्तिच्छन्दः नृसिंहो देवता जपे विनियोगः ॥ षडक्षरैः षडंगः अव्यान्निर्व्याजेत्यादिध्यानं षडलक्षजपः षट्सहस्रहोमः घृतेनकेवलेन फलं तु वैरिग्रहादिनाशः सकलकामाप्तिश्च ॥

## ( अथ कृष्ण मंत्र विधानम् )

कृष्ण मध्यगताः ष्णाय गोव्यणों वल्लमध्यगाः गोपीजनवकाराः स्युर्भाय स्वाहा स्मरादिकाः ॥ १ ॥

ऋषिस्तु नारदोस्यस्याद्गायत्रं छन्द इष्यते मंत्रस्य देवता कृष्णस्तदङ्गविधिरुच्यते ॥ २ ॥

मूलमंत्रचतुर्वर्णचतुष्केन द्विकेन च प्रोक्तान्यङ्गानि भूयोऽमुं चिन्तयेद्देवकीसुतम् ॥ ३ ॥

अव्यान्मालत्कलापद्युतिराहिरिपुपिञ्छोल्लसत्केशजालो गोपीनेत्रोत्पलाराधितललितवपुर्गोपगोवृन्दवीतः । श्रीमद्वक्त्रारविंद-

प्रतिहासितशशाङ्काकृतिः पीतावासा देवोऽसौ नुपरोज्जपितजन-धृतिर्देवकीनन्दनो वः ॥ ४ ॥

अयुतद्वितयावधिर्जपः स्यादरुणैरम्बुरुहैर्हुतो दशांशैः मुरजिद्विहिते तु पीठवर्ये दिनशो नन्दसुतः समर्चनीयः ॥५॥

अङ्गाशेड्वज्राद्यैः परिवृत्य च पायसेन सुसितेन । हैयङ्गवी-नकदलीफलदधिभिः प्रीणयेच्च गोविन्दम् ॥ ६ ॥

जुहुयाद्दुग्धहविर्भिः विमलैः सर्पिः सितोपलोपेतैः । इष्टो तुष्टो लक्ष्मीं समावहेत्सद्य एव गोविन्दः ॥ ७ ॥

बालं नीलाम्बुदाभं नवमणिविलसत्किङ्किणीजालनद्धश्रोणी-जंघान्तयुग्मं विपुलरुरुनखप्रोल्लसत्कंठभूषम् । फुल्लाम्भोजाभवक्त्रं हतशकटपतत्पूतनाद्यं प्रसन्नं गोविन्दं वन्दितेन्द्राद्यमरवरमजं पूजयेद्वासरादौ ॥ ८ ॥

वंद्यं देवैर्मुकुन्दं विकसितकरवन्दाभमिन्दीवराक्षं गोपीगो-बृन्दवीतं जितारिपुनिवहं कुन्दमंदारहासम् । नीलग्रीवाग्रपिञ्छाक-लनसुविलसत्कुंतलं भानुमन्तं देवं पीताम्बराढ्यं यजतु च दिनशो मध्यमेऽह्नो रमायै ॥ ९ ॥

विक्रान्त्या ध्वस्तवैरिव्रजमजितमपास्तावनीभारमाद्यैरावीतं

नारदाद्यैर्मुनिभिरनुदिनं तत्वानिर्णीतिहेतोः सायाह्ने निर्मलं तं निरुपममजरं पूजयेन्नीलभासं मंत्री विश्वोदयस्थित्यपहरणपरं मुक्तिदं बासुदेवं ॥ १० ॥

त्रिकालमेवं प्रविचिन्त्य शार्ङ्गिणं प्रपूजयेद्यो मनुजो महामनाः । सधर्ममर्थं सुसुखं श्रियं परामवाप्य देहापदि मुक्तिमाप्नुयात् ॥ ११ ॥

ग्रामं गच्छन्नगरमपि वा मंत्रजापी मनुष्यो देवेशं तं मुखमनुमुहुस्तर्पयेद्दुग्धबुद्ध्या शुद्धैस्तोयैः स तु वहुरसोपेतमाहारजातं दद्यान्नित्यं प्रचुरधनधान्यां[illegible] कावर्मुकुन्दः ॥ १२ ॥

भिक्षावृत्तिर्दिनम[illegible]तमवं विचिन्त्यात्मरूपं गोपस्त्रीभ्यो मुहुरपहरन्तं मनोभिः सहैव लीलावृत्या ललितललितैश्चेष्टितैर्दुग्धसर्पिर्दध्याद्यं वा सपुनरमितामेति भिक्षां गृहेभ्यः ॥ १३ ॥

ध्यानी मंत्री मंत्रजापी च नित्यं यद्यद्गाऽच्छन्यत्र यत्र [illegible]यांत तत्तत्प्राप्त्वा तत्र तत्र प्रकामं प्रीतः क्रीडेद्देववन्मानुषेषु ॥ १४ ॥

एवं देवं पूजयन्मंत्रमेनं जप्यामंत्री [illegible]र्लोकप्रियःस्यात् इष्टान्कामान्प्राप्य संपन्नवृत्तिर्नित्यं शुद्धं तत्परं धाम भूयात् ॥१५॥

क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभायस्वाहा ।

अस्य श्रीगोपालमंत्रस्य नारदऋषिर्गायत्रीछन्दः कृष्णो देवता सर्वेष्टसिद्धये जपे विनियोगः ॥

क्लीं कृष्णाय अंगुष्ठाभ्यां नमः। गोविन्दाय तर्जनीभ्यां नमः। गोपीजन मध्यमाभ्यां नमः । वल्लभाय अनामिकाभ्यां नमः। स्वाहा करतलकरपृष्टाभ्यां नमः । एवं हृदयादिन्यासः "अव्या-न्मीलत्कलापेत्यादिध्यात्वा" तद्धितयं जपः रक्तकमलैर्दशांसतो होमः सर्वसंपद्मोक्षादिप्रदोऽयं मनुः ॥

अथ प्रणवसंज्ञकं प्रतिवदामि मंत्रं परं सजापमपि सार्चनं सहुतक्लृप्तिसोपासनम् ॥

अशेषदुरितापहं विविधकामकल्पद्रुमं विमुक्तिफलसिद्धिदं विमलयोगिसंसेवितम् ॥ १ ॥

आद्यः स्वरः समेतोऽमरेण सधसप्तमश्च विन्दुयुतः प्रोक्तः स्यात्प्रणवमनुस्त्रिमात्रिकः सर्वमंत्रसमवायी ॥ २ ॥

मंत्रस्यास्य मुनिःप्रजापतिरथच्छन्दश्च देव्यादिका गायत्री गदिता जगत्सु परमात्माख्यस्तथा देवता । अक्षीवैर्युगमध्यग-

ध्रुवयुतैरङ्गानि कुर्यात्स्वरैर्मंत्री जातियुतैश्च सत्यरहितैर्वा व्याहृतीभिः क्रमात ॥ ३ ॥

विष्णुं भास्वत्किरीटाङ्गदवलय‌‌ गाकल्पहारोदरांघ्रिश्रोणीरूपं सवक्षोमणिमकरमहाकुण्डलामण्डिताङ्गम् । हस्तोद्यच्चक्रशंखाम्बुजगदममलं पीतकौशेयमाशाविद्योतद्भासमुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि ॥ ४ ॥

दीक्षितो मनुमिमं शतलक्षं संजपेत्प्रतिहुनेच्च दशांशम् पायसैर्घृतयुतैश्च तदन्ते विप्रभूरुहभवाः समिधो वा ॥ ५ ॥

सर्पिः पायसशालीतिलसमिदाद्यैरनेन यो जुहुयात् ऐहिकपारत्रिकमपि स तु लभते वांञ्छितं फलं न चिरात् ॥ ६ ॥

अभ्यर्च्य वैष्णवमथो विधिनैवपीठमावाह्य तत्र सकलार्थकरं मुकुन्दम् । अङ्गैःसमूर्तियुगशक्तियुगैःसुरेन्द्रवज्रादिकैर्यजतु मंत्रिवरः क्रमेण ॥ ७ ॥

वासुदेवः संकर्षणःप्रद्युम्नश्चानिरुद्धकः स्फटिकस्वर्णदूर्वेन्द्रनीलाभा वर्णतो मताः ॥ ८ ॥

चतुर्भुजाश्चक्रशंखगदापंकजधारिणः किरीटकेयूरिणश्च पीताम्बरधरा अपि ॥ ९ ॥

सशान्तिश्रीसरस्वत्यौ रतिश्चाश्रिदलाश्रिता अच्छपद्म-रजोदुग्धदूर्वावर्णाः स्वलंकृताः ॥ १० ॥

आत्मान्तरात्मपरमाज्ञानात्मानस्तुमूर्तयः वृत्तिश्च प्रतिष्ठा च विद्याशान्तिश्च शक्तयः ॥ ११ ॥

ज्वलज्ज्वालासमाभाः स्युरात्माद्या मूर्तिशक्तयः इति पंचावणकं विधानं प्रणवोद्भवम् ॥ १२ ॥

इत्थं मंत्री तारममुं जापहुतार्चाभेदैरङ्गीकृत्य च योगानपि युञ्ज्यात । यैः संलब्ध्वा चेह समग्रां श्रियमन्ते शुद्धं विष्णोर्धाम परं प्रापस्यति योगी ॥ १३ ॥

करपादमुखा दिविहीन मनारतदृश्यमनन्यगमात्मपदम् यमिहात्मनि पश्यति तत्वविदस्तामिमं किल योगमिति ब्रुवते ॥ १४ ॥

योगातिदूषणपरं त्वथकामकोपलोभप्रमोहमदमत्सरतेति षट्कम वैरिं जयेत्सपदि योगविदेनमङ्गै र्योगस्य धीरमति-रष्टभिरिष्टदैश्च ॥ १५ ॥

यमानियमासनपवनायामाः प्रत्याहृतिश्च धारणया ध्यानं चापि समाधिः प्रोक्तान्यङ्गानि योगयोग्यानि ॥ १६ ॥

सत्यमहिंसा समताधृतिरस्तेयं क्षमार्जवं च तथा वैराग्य मिति यमः स्यात्स्वाध्यायतपोर्चनाव्रतानि तथा ॥ १७ ॥

संतोषश्च सशौचो नियमः स्यादासनं च पंचविधम् पद्मस्वातिकभद्रकवज्रकवीराह्वयं क्रमात्तदपि ॥ १८ ॥

रेचकपूरककुंभकभेदात्त्रिविधः प्रभंजनायामः मुंचेद्दक्षिणया निलमथानयेद्वामया च मध्यमया ॥ १९ ॥

संस्थापयेच्चनाड्येत्येवं प्रोक्तानि रेचकादीनि षोडशत-दूद्विगुणच॒ः षष्टि॒मात्राणि तानि च क्रमशः ॥ २० ॥

चित्तात्मैक्यधृतस्य प्राणस्य स्थानसंहृतिः स्थानात् प्रत्या-हारो ज्ञेयश्चैतन्ययुतस्य सम्यगनिलस्य ॥ २१ ॥

स्थानस्थापनकर्मप्रोक्तास्याद्धारणेति तत्वज्ञैः यो मनसि देवताया भावः स्यात्तस्य मंत्रिणः सम्यक् ॥ २२ ॥

संस्थापयेच्च तत्रेत्येवं ध्यानं वदन्ति तत्वविदः सत्तामात्रं नित्यं शुद्धमपि निरंजनं च यत्प्रोक्तम् ॥ २३ ॥

तत्प्रविचिन्त्य सतास्म श्चित्तलयः स्यात्समाधिरुद्दिष्टः अष्टाङ्गै-रितिकथितैः पुनराशु निगृह्यतेरिरात्मविदा २४। अथ वा शोषण-

दहनप्लावनभेदेन शोधिते देहे पंचाशद्भिर्मात्राभेदैर्विधिवत्समाय-मेत्प्राणान् ॥ २५ ॥

पंचाशदात्मकोपि च कलाप्रभेदेन तार उद्दिष्टः तावन्मात्रायमनात्कलाश्च विधृता भवन्ति तत्वविदा ॥ २६ ॥

पूर्वमिडाया वदने विचिन्तयेद्धूमानिलं बीजम् । तेनागतेन देहं प्रशोषयेत्सान्तराधिकरचरणम् ॥ २७ ॥

पिङ्गलया प्रतिमुंचेत्तथैव कार्शानवेन रक्तरुचा प्रतिदह्य पूर्वविधिना मुंचेन्नैशाकरेण सुसितेन ॥ २८ ॥

संपूरयेत्सुधामयजलशीकरवर्षिणा तनुं सकलां निर्माय मानसेन च परिपूर्णमनाश्चिरं भूयात् ॥ २९ ॥

सुजीर्णमितभाजनः सुखसमात्तनिद्रादिकः सुशुद्धतलसद्गृहे विरहिते च शीतादिभिः पटाजिनकुशोत्तरे सुविशदे च मृद्धासने निमीलितविलोचनः प्रतिविशेत्सुखं प्राङ्मुखः ॥ ३० ॥

प्रसारितं वामकरं निजाङ्के निधाय तस्योपरि दक्षिणं च ऋजुः प्रसन्नो विजितेन्द्रियः सन्नाधारमत्यन्तसमे स्मरे-त्स्वम् ॥ ३१ ॥

तन्मध्यगतं प्रणवं प्रणवस्थं बिन्दुमपि च बिन्दुगतम् नादं विचिन्त्य तारं यथावदुच्चारयेत्सुषुम्नान्तम् ॥ ३२ ॥

तन्मध्यगतं शुद्धं शब्दब्रह्मातिसूक्ष्मतन्तुनिभम् ! तेजःस्मरेच्च तारात्मकमपि मूलं चराचरस्य सदा ॥ ३३ ॥

ओंकारो गुणबीजं प्रणवस्तारो ध्रुवश्च वेदादिः । आदि-रुमध्योमपरो नामान्यस्य त्रिमात्रिकश्च तथा ॥ ३४ ॥

अस्य तु वेदादित्वात्सर्वमनूनां प्रयुज्यतेऽथादौ योनिश्च सर्वदेहे भवति च स ब्रह्म सर्वसंवादे ॥ ३५ ॥

ऋक् च तदाद्यादिः स्यात्तन्मध्यान्तं यजुश्च मान्तादिः सामापि तस्य भेदा बहवः प्रोक्ता हि लोकवेदेषु ॥ ३६ ॥

उच्चार्योंचार्य च तं क्रमान्नयेदुपरिषड्द्वयान्तान्तम् मनसा स्मृते यदास्मिन्म-ोलयं याति तावदभ्यस्येत ॥ ३७ ॥

अथवा बिन्दुं वर्तुलमावर्तैस्त्रिभिरुपेतमेवमिव प्रोतं रविबिम्बेन च समभ्यसेत्स्रुतसुधामयं तेजः ॥ ३८ ॥

अपमृ रागपापाजि चिरेण सुसि दो नृणां योगः अथ वा मूलाधारोत्थिता प्रभा बिसान्निभेदतन्तुनिभा ॥ ३९ ॥

वदनामृतकरबिम्बस्ता ध्यातामृताम्बुलवलुलितास्थावर-जङ्गमविषहृद्योगोयं नात्रसंदेहः ॥ ४० ॥

अथवा त्रिवलयबिन्दुगधाम प्रणवेन संनयेदूर्ध्वम् पीतोर्णा-तन्तुनिभं सौषुम्नेनैव वर्त्मना योगी ॥ ४१ ॥

तस्मिन्निधाय चित्तं विलयं गमयेद्दिनेशसंख्यान्ते पुनरावृत्ति विहीनं निर्वाणपदं व्रजेत्तदभ्यासात् ॥ ४२ ॥

अथ वादिबीजमौपुनरुमपि विषे तमपि संहरेद्विन्दौ बिन्दुं नादे तमपि च शक्तौ शक्तिं तथैव शान्ताख्ये ॥ ४३ ॥

तेजस्यनन्यगे चिति निर्द्वन्द्वे निष्कले सदानन्दे सूक्ष्मे च सर्वतोमुखकरपदनयनादिलक्षणालक्ष्ये ॥ ४४ ॥

स्वात्मनि संहृत्यैवं करणेन्द्रियवर्गनिर्गमापेतः निर्लीनपुण्य-पापो निरुच्छ्वसन्ब्रह्मभूत एव स्यात् ॥ ४५ ॥

अथवा योगोपेताः पंचावस्थाः क्रमेण विज्ञाय ताभिर्युञ्जी-तसदा योगी सद्यः प्रसिद्धये मुक्तेः ॥ ४६ ॥

जाग्रत्स्वप्नसुषुप्तीतुरीयतदतीतकौ पुनस्तासु स्वैरिन्द्रियैर्य-दात्मा भुङ्क्ते भोगान्सजागरो भवति ॥ ४७ ॥

संज्ञारहितैरपि तैस्तस्यानुभवो भवेत्पुनः स्वप्नः आत्मनि रुद्युक्ततया नैराकुल्यं भवेत्सुषुप्तिरपि ॥ ४८ ॥

पश्यति परं यदात्मा निस्तमसा तेजसा तुरीयं तत् आत्मपरमात्मपदयोरभेदतो व्याप्नुयाद्यदा योगी ॥ ४९ ॥

तच्च तुरीयातीतं तस्यापि भवेन्नदूरतो मुक्तिः अथवा सूक्ष्माख्यायां पश्यन्त्यां मध्यमाख्यवैखर्योः ॥ ५० ॥

ससुषुम्नाग्रक गोरपि युंजीयाज्जाग्रदादिभिः पवनम् बीजोच्चारो जाग्रद्बिन्दुः स्वप्नः सुषुप्तिरपि नादः ॥ ५१ ॥

शक्त्यात्मना तुरीयः शान्तेलयआत्मनस्तुरीयान्तम् अंगुष्ठगुल्फजंघाजानुद्वितयं च सीवनी मेढ्रम् ॥ ५२ ॥

नाभिर्हृदयं ग्रीवा सलम्बिकाग्रं तथैव नासाग्रम् भ्रूमध्यललाटाग्रसुषुम्नाग्रं द्वादशान्तमित्येकम् ॥ ५३ ॥

उत्क्रान्तौ परकायप्रवेशने चागतौ पुनः स्वतनौ स्थानानिधारणायाः प्रोक्तानि मरुत्प्रयोगविधिनिपुणैः ॥ ५४ ॥

स्थानेष्वेष्वात्ममनः समीरसंयोगकर्मणोऽभ्यासात् अचिरेणोत्क्रान्ताद्याः भवन्ति संसिद्धयः प्रासक्तराः ॥ ५५ ॥

कण्ठे भ्रूमध्ये हृदि नाभौ सर्वाङ्गके स्मरेत्क्रमशः लवरसमी-
रखवर्णैरनिलमहाकालवंचनेयं स्यात् ॥ ५६ ॥

अवनिजलानलमारुतविहायसां शक्तिभिश्च तद्बिम्बैः सारू-
प्यमात्मनश्च प्रतिनीत्वा तत्तदाशु जयति सुधीः ॥ ५७ ॥

एवं प्रोक्तै योगैरायोजयतोन्वहं,तथात्मानम् अचिरेण भवति
सिद्धिः समस्तसंसारमोचनी नित्या ॥ ५८ ॥

इति योगमार्गभेदैः प्रतिदिनमारूढयागयु[illegible]ः सिद्धय-
उपलक्ष्यन्ते मोक्षपुरीसंप्रवशन[illegible]ाराः ॥ ५९ ॥

कम्पः पुलकानन्दौ वैमल्यस्थैर्यलाघवानि तथा सकलप्र[illegible]ा-
शवित्तेत्यष्टावस्थाः प्र[illegible]चकाः सिद्धेः ॥ ६० ॥

त्रैकाल्यज्ञानोहौ मनोज्ञता च्छन्दतो मरुद्रोधः नाडीसंक्रमण-
विधिर्वाक्सिद्धिर्देहतश्च देहाप्तिः ॥ ६१ ॥

ज्योतिः प्रकाशनं चेत्यष्टौ स्युः प्रत्ययायुजः सिद्धेः अणिमा
महिमा च तथा लघिमा गरिमेशिता वाशित्वं च ॥ ६२ ॥

प्राप्तिः प्राकाम्यं चेत्यष्टैश्वर्याणि योग[illegible]कस्य । अष्टैश्वर्यस-

मेतो जीमन्मुक्तः प्रवक्ष्यते योगी योगानुभवमहामृतरसपाना-
नन्दानिर्भरः सततम् ॥ ६३ ॥

इत्येवं प्रणवविधिः समीरितोयं भक्त्या तं प्रभजति यो जपादिभेदैः संप्राप्नोत्यनुततनित्यशुद्धबुद्धं तद्विष्णोः परमतरं पदं नराग्रयः ॥ ६४ ॥

## ( अथ सुदर्शनमंत्रविधानम् )

अथ प्रवक्ष्यामि सुदर्शनस्य विधिं मनोज्ञं ग्रहतेजपादैः । यत्सिद्धितः सिद्धिमवाप्यरम्यां सिद्धा मुनीन्द्राअपि सद्यएव ॥१॥

अन्त्यतुरीयतदादिकभृगुदहनानन्तवाह्निवर्मास्त्रैः । तारादिर्मनुरुक्तः स्यादभिमतासिद्धिदो रथाङ्गाख्यः ॥ २ ॥

ऋषिरस्याहिर्बुध्न्यश्छन्दोऽनुष्टुप्चदवता विष्णुः। चक्रपदैरा-विसुधीसंज्वालाद्यैः शिरोन्वितैरङ्गम् ॥ ३ ॥

ऐन्द्रीं समारभ्य दिशंत्वधस्तादन्तं समुक्त्वा क्रमशो दशानाम् । चक्रेण वध्नामि नमस्तथोक्त्वा चक्राय शीर्षंचादिशां प्रबन्धः ॥ ४ ॥

त्रैलोक्यं रक्षरक्षेति हुंफट्स्वाहेति चोदितः तारादिकोऽयं मन्त्रः स्यादग्निप्राकारसंज्ञकः ॥ ५ ॥

तारं तु मूर्ध्न्यथ सितारुणकृष्णवर्णं मध्ये भ्रुवोश्च समथो वदने हकारम्। हृद्गुह्यजानुपदसंधिषु चावशिष्टान्वर्णान्न्यसेदिति तनौ पुनरग्निवर्णान् ॥ ६ ॥

अन्याद्भास्करसप्रभाभिरखिलाभाभिर्दिशो भासयन् भीमाक्षः क्षरदट्टहासविकसद्दंष्ट्राप्रदीप्ताननः। दोर्भिश्चक्रदरौ गदाब्जमुसलास्त्रासींश्च पाशांकुशौ बिभ्रत्पिङ्गशिरोरुहोऽथभवतश्चक्राभिधानो हरिः ॥ ७ ॥

प्रोक्त्वा सुदर्शनायेति विद्महेन्ते महापदम्। ज्वालाय धीमहे चोक्त्वा तन्नश्चक्रः प्रचोदयात ॥ ८ ॥

सौदर्शनीयं गायत्री जप्तव्या जप्तुमिच्छता। सांनिध्यकारिणीं मुद्रां दर्शयेदनया सुधीः ॥ ९ ॥

नमो भगवते प्रोक्त्वा महासुदर्शनाय च महाचक्राय च तथा महाज्वालाय चेत्यथ ॥ १० ॥

दीप्तिरूपाय चत्युक्त्वा सर्वतो रक्षरक्ष माम्। महाबलाय स्वाहेति प्रोक्तस्तारादिको मनुः। रक्षाकरः प्रसिद्धोऽयं क्रियमाणेषु कर्मसु ॥ ११ ॥

षट्कोणान्तःस्थतारं विवरलिखितमन्त्राक्षरं सिद्धिराजस्त्वाङ्गं बाह्ये कलाकेसरमुदरगताष्टाक्षरं चाष्टपत्रम् । पद्मं वर्णैर्विराजद्विकृतिदललसत्षोडशार्णं त्रिवीतं व्योमान्त्यार्णं स्वनाम्ना विरचित[illegible]शाङ्कुशं चक्रयन्त्रं ॥ १२ ॥

प्रणवहृद्भगवद्युतङ महादिकरथाङ्गचतुर्थिहुमस्त्रकैः । निगदितस्त्विह षोडशवर्णको मनुवरो मुनिभिर्विहितादरः ॥ १३ ॥

क्वाथैः पयोभूरुहचर्मसिद्धैर्दुग्धेन गव्यैरपि पञ्चभिर्वा मूत्रैः पशोर्वा प्रतिपूर्य कुम्भं समर्चयेच्चक्रहरिं यथावत् ॥ १४ ॥

अङ्गैः प्रथमावृतिरपि पूज्या चक्रादिभिर्द्वितीया च लक्ष्म्यादिभिस्तृतीया क्रमात्तथेन्द्रादिभिश्चतुर्थी स्यात् ॥ १५ ॥

चक्रशंखगदापद्ममुसलाधनुरेवच । पाशाङ्कुशौ पीतरक्तसितश्यामा द्विजास्त्विमाः ॥ १६ ॥

लक्ष्मीः सरस्वती चाथ रतिः प्रीत्याह्वया तथा । कीर्तिः कान्तिस्तुष्टिपुष्टी क्रमेणैव तु शक्तयः । १७ ॥

संपूज्य चैवं विधिना हरिं तु शिष्यं गुरुः प्रीततमोऽभिषिञ्चेत । भक्त्या स्व[illegible]क्त्या विभवैर्द्विजातीन्संतर्प्य भूयो गुरुणानुशिष्टः ॥ १८ ॥

एकाग्रचित्तो रविलक्षसंख्यं जपेन्मनुं नित्य[illegible]ताभिपूजः
तावत्सहस्रंतिलसर्षपाश्च विल्वाज्यदोग्धानि जुहोतु सम्यक् ॥१९॥

समुद्रतीरेप्यथ वाद्रिशृङ्गे समुद्रगानां सरितां च तीरे ।
जपेद्विविक्ते निज एव गेहे विष्णोर्गृहे वा पुरुषो मनस्वी ॥२०॥

यथोक्तसंख्यं विधिवत्प्रजप्ते मंत्रे यथोक्तैश्च हुते हुताशे ।
द्रव्यैरथस्वार्थपरार्थहेतोः कुर्यात्प्रयोगान्विधिना यथावत् ॥२१॥

पीताभा कर्णिकारस्यादरुणतरमरं श्यामलं चान्तरालं नेमिश्वेतं च बाह्ये विरचितिशितरेखाकुलं पार्थिवान्तम् । चक्रद्वन्द्वं लिखित्वा विशदमतिरथो सोम्ययाम्यं च मंत्री कुंभं संपूर्य सौम्ये प्रचयतु तथा दाक्षिणे होमकर्म ॥ २२ ॥

षड्त्रिंशच्छतसंमितैरथ घृतापामार्गजेध्माक्षतैः सद्राजीतिलपायसैश्च सकलैर्द्रव्यैर्घृतान्तैः क्रमात् हुत्वा तद्धुतशिष्टमत्र विधिवत्क्षिप्त्वा प्रतिद्रव्यकं प्रस्थार्घान्नकृतं च पिण्डममलं कुम्भोदके मंत्रवित् ॥ २३ ॥

संस्थाप्य द[illegible]णस्या साध्यं कुम्भेन तेन नीराज्य । तमथघटं सद्रव्यं वहिराराद्दष्टमे क्षिपे[illegible]शो ॥ २४ ॥

अग्न्यादिकमपि सर्वं क्षिपेदथ घटस्य दक्षिणे भागे।
हुतशिष्टान्नेन बलिं मंत्रेणानेन मंत्रवित्कुर्यात् ॥ २५ ॥

हृदयान्ते विष्णुपदं प्रोक्त्वाथ गणेभ्य उच्चरेत्सर्वम्। शान्ति-
करेभ्यश्च बलिं गृह्णन्त्विति शान्तये नमोन्तं स्यात ॥ २६ ॥

ज्वरादिकां रोगपरम्परां वा विस्मृत्यपस्मारभवां रुजं वा।
रक्षः पिशाचग्रहवैकृतं वा विधिस्त्वयं मङ्क्षु हरेद्विकारम् ॥२७॥

पालाशे वां स्तनजद्रुमजैर्वा पञ्जरे कृते फलकैः। संपूर्य
पंचगव्यैस्तत्र तु संस्थाप्य शुद्धमपि गदिनम् ॥ २८ ॥

पूर्वोद्दिष्टैर्दिक्ष्वपि सजपं जुहुयुः पृथग्द्विजा वशिनः। द्रव्यैः
सदक्षिणान्तानभ्यर्च्य विमुच्यते रुजो जन्तुः ॥ २९ ॥

विप्रक्षीरद्रुमत्वङ्मलयजपुरकाश्मीरगन्धात्रेयामा विल्वापा-
मार्गराजीतिलतुलसियुगक्रान्तिदूर्वायवार्कैः। लक्ष्मीदेवीकुशागो
मयकमलवचारोचना पञ्चगव्यैः सिद्धेग्नौ कुम्भसिद्धं मनुजप-
सहितं भस्म सर्वार्थदायि ॥ ३० ॥

लक्ष्म्यायुष्करमतुलं पिशाचभूतापस्मारादिकमाचिरेण
नाशयेच्च। क्षुद्रादीनपि विविधांस्तथोपसर्गा नेतस्मात्र परतरा
समास्ति रक्षा ॥ ३१ ॥

जुहुयाद्गुग्गुलुगुलिका सहस्रकं साष्टकं च मन्त्रितमः। त्रिदिनं चतुर्दिनं वा सर्वोपद्रवनिवारणं भवति ॥ ३२ ॥

खरमञ्जर्याः समिधामयुतं बा मन्त्रवित्तमो जुहुयात् ज्वरभूतामयविस्मृतयपस्मृतीः शमयितुं नियतचित्तः ॥ ३३ ॥

आज्याक्तैर्जुहुयाच्छ्रियै सरसिजैर्दूर्वाभिरप्यायुषे मेधायै द्विजभूरुहैश्च कुमुदैः श्वेतैस्तथा वाससे। शुद्धाज्यैः पशवेऽप्युदुम्बरभवैः पुत्राय चाश्वत्थजे रेकार्द्ध विधिवत्सहस्रसमितैरष्टोत्तरं मुक्तये ॥ ३४ ॥

चक्रस्य नाभिसंस्थं कृत्वात्मानं मनुं जपेन्मंत्री। स्वयमेकोपि न युद्धे मर्त्योवहुभिः पराजितो भवति ॥ ३५ ॥

मंत्री सुनियतचित्तश्चक्रस्थं भ्रामयेद्धिया ग्रस्तम् आविश्यसकलमुक्त्वा मुञ्चति दग्धोग्निना शुनाभिभुवा ॥ ३६ ॥

दीप्तं करालदहनप्रतिमं च चक्रं यस्य स्मरेच्छिरसि कस्यचिदप्रियस्य। सप्ताहतोऽस्यदहनप्रतिमोज्वरः स्यात्त्रिंशद्दिनैश्च सपरेतपुरं प्रयाति ॥ ३७ ॥

कलावृतं चाहिपदाभिवेष्टितं समक्षरं यच्छिरसि स्मरेत्सदा।

दशाहतोसौ प्रतिचाल्यते रिपुसंतिं तथा मण्डलतः प्रयाति ॥ ३८ ॥

सान्तं वायसवर्णं शत्रोः शिरसि स्मरेच्च सप्ताहम् । उच्चाटयति क्षिप्रं मारयतो वाधिवोस्यनैशित्यात् ॥ ३९ ॥

स्रवत्सुधावर्षिणमिन्दुसप्रभं समुज्ज्वलं यच्छिरसि प्रचिन्तयेत् क्षणात्समाप्यायितसर्वविग्रहो भवेत्समर्त्यः सुचिरंच जीवति ॥ ४० ॥

मध्ये तारं तदनु च मनुं वर्णशः कोणषट्के वाह्ये चाङ्गं लिखतु करके रूप्यके वापि ताम्रे पाषाणे वा विधिवदथ जप्याय संस्थापितं तच्चक्रं चोरग्रहरिपुभयध्वांसि रक्षाकरं च ॥ ४१ ॥

स्थाने हृषीकेशविदर्भितं च स्पष्टाक्षरं चाऽयभिजप्तमेतत् । रक्षांग्रहादेः सततं विधत्ते यन्त्रं सुकृप्तं च मनुत्रयेण । अष्टाक्षरान्तरितपादचतुष्ककोष्ठं कोष्ठत्रयालिखितसाध्यसुदर्शनं च रेखाभिरभ्युभयतः श्रुतिशः प्रबद्धं तत्सप्तकोष्ठमिति यन्त्रमिदं प्रशस्तम् ॥ ४२ ॥

भूर्जे वा क्षौमपट्टे तनुमसृणतरे कर्पटेवास्य यन्त्रं मन्त्री सम्यग्लिखित्वा पुनरपि गुलिकीकृत्य लाक्षाभिवीतम् । कृत्वा

भस्मादिहोमप्रविहितघृतसंपातपातात्तशक्ति जसं सम्यङ्निदध्यात्प्रतिशममुपयान्त्येव सर्वे विकाराः ॥ ४३ ॥

अथप्रयोगः ( ॐ सहस्रार हुंफट् ) ॐ अस्य श्रीसुदर्शनमंत्रस्य अहिर्बुध्न्यऋषिरनुष्टुप्छंदः चक्ररूपी विष्णुर्देवता इष्टार्थे जपेविनियोगः । ऋष्यादिकं कृत्वा । आचक्रायस्वाहा अंगुष्ठाभ्यां नमः । ओं विचक्रायस्वाहा तर्जनीभ्यांनमः । ओं सुचक्रायस्वाहा मध्यमाभ्यांनमः । ॐ धीचक्राय स्वाहा अनामिकाभ्यांनमः । ॐ संचक्रायस्वाहा कनिष्ठकाभ्यांनमः । ॐज्वाला चक्राय स्वाहा करतलकरपृष्ठाभ्यांनमः । एवं हृदयादिन्यासं कृत्वा । "अव्याद्भास्करेत्यादिश्लोकोक्तं ध्यात्वा द्वादशलक्षं जपेत् द्वादशसहस्रं तिलसर्षपविल्वाज्यदोग्धानां होमः ओं ऐन्द्रीं दिशं चक्रेण वध्नामि नमश्चक्राय स्वाहा एवं दशदिग्बंधनं कुर्यात् । ॐ त्रैलोक्यं रक्ष रक्ष हुंफट् स्वाहा इति अग्निप्राकारसंज्ञकमंत्रः । सुदर्शनाय विद्महे महाज्वालायधीमहि तन्नश्चक्रः प्रचोदयात् इतिगायत्रीमंत्रः । ॐ नमोभगवते महासुदर्शनाय महाचक्राय महाज्वालायदीप्तरूपाय सर्वतो रक्ष रक्ष मां महाबलाय स्वाहेति रक्षामंत्रः । ॐ नमो भगवते महारथाङ्गाय हुंफट् इति षोडशाक्षर मंत्रः पूजनादिकं मूले स्पष्टम् ।

इति श्री मत्सर्वतंत्रस्वतंत्र विद्यावाचस्पति वेदराज पं० देवदत्तशर्मविरचिते वेदान्तसिद्धान्तमतमार्त्तण्डे उपासनाख्यश्चतुर्थः पादः

